। श्रीगणेशाय नमः ।

# कथामुक्तावली

१५ लघुकथानां संग्रहः

पण्डिता सौ० क्षमा राव



न. मा. त्रिपाठी लि.
पुस्तकविक्रेतारः प्रकाशकाश्च
प्रिन्सेस स्ट्रीट
मुम्बापुरी २

प्रथमावृत्तिः
माघे शाके १८७७ तमे संवत्सरे
द्वितीयावृत्तिः
पौषे शाके १८८१ तमे संवत्सरे

लेखिकाया दुहित्रा
लीला राव दयाळ इत्यनया
३७ न्यू मरिनलाइन्स, मुम्बापुरी १ इत्यत्र
प्रकाशिता ग्रन्थस्वामित्वस्य सर्वाधिकाराः स्वायत्तीकृताश्च




मूल्यं चत्वारो रूपका अष्ट आणकाश्च
रु. ४-८-०

बाळकृष्ण गणेश ढवळे
इत्यनेन
कर्नाटक मुद्रणालये मुम्बापुरी
इत्यत्र मुद्रिता

# INTRODUCTION

Pandita Kshama Row was undoubtedly the most eminent Sanskrit poet of our time. Her magnificent epics, *Satyāgraha Gita and Uttara Satyāgraha Gita* on the life of Mahatma Gandhi, rank her with the great poets of Sanskrit, while her *Mira Lahari, Ramdas Charitam* and other works show her as a fine interpreter of the religious tradition of India. The present volume *Kathā Muktāvali* shows a different but equally scintillating facet of her many-sided genius. A collection of short stories on modern themes, in simple and elegant prose, reflecting the life of present-day India is a distinct and unique contribution to Sanskrit Literature. It is not that Sanskrit has no tradition of story-telling. Indeed it may well be argued that the art of story-telling in all modern literature has its origin in India. The stories of the *Panchatantra* collection and of the *Kathā Saritsāgara* have found their way into all languages. But the short-story as a separate literary genre is of recent origin. Its themes, techniques, and even its objects, if literary creation could be said to have objects, are different from the story-telling of the *Panchatantra* or the *Kathā Saritsāgara.* The modern short-story deals with living problems, seeks to throw light on a heightened emotion or a dramatic situation and tries to reflect the conditions of society. Pandita Kshama Row can legitimately claim to be the pioneer in this field of Sanskrit. The collection now offered to the public is, so far as I know, the first of its kind in India's classical language.

The stories are interesting in themselves dealing with the life of simple ordinary folk in different parts of India. If some of them relate to life in Kashmir, others are located in Bombay, Mahableshwar, Abu, etc. The place descriptions are highly enchanting, and here the Pandita, I am happy to note, follows the classical tradition of Sanskrit, and gives free rein to her poetic talent. The descriptions of Kashmir, Abu, etc. are in melodious, poetical prose, sensitive but simple, with an elegance of diction which is possible only in Sanskrit.

Her stories are simply constructed. The dialogues are natural, the characterisation effective. Considered purely as stories, they would have a high place in the short-story literature of Modern India. But when we consider their literary quality, the purity and nobility of sentiment, and the deep strain of patriotism which runs through the whole, the *Kathā Muktavali* will be entitled to place among modern classics.

It is perhaps the price one pays for writing in a classical language that Pandita Kshama Row's works—even her *Satyāgraha Gita*—should be known only to students of Sanskrit in different parts of India and not have achieved a national popularity. That they should have been neglected in these days of national prizes and Academy awards is indeed to be regretted : for the late Pandita was one who had not only devoted a life-time to the cultivation of Sanskrit Letters, but had demonstrated by her works that Sanskrit is no mere classical language, but a living vehicle of expression, capable still, in the hands of a master, of enriching our literature by creative productions of the highest quality.

*Kathā Muktāvali* which is being published posthumously is only one of her numerous works awaiting publication and I can but hope that the public no less than those who are concerned with the encouragement of literature will welcome this volume with open hands.

K. M. Panikkar

October 16, 1954.

# अनुक्रमः



---

॥ श्रीगणेशाय नमः ॥

# १. प्रेमरसोद्रेकः

"मा स्म भैषीः पितामह, मा स्म भैषीः। नाहं शिशुरस्मि। त्रयोदशवर्षीयास्मि खलु। समर्थास्मि रक्षितुमात्मानम्" इति जगादास्मानाम्नी बालिका काचित्।

"किन्तु वत्से! दिवसोऽवसितप्रायः। सूर्यास्तमनं चेदानीमचिराद्भविष्यति।"

"पितामह! क्षेत्रपतये चिरव्यवसायिने किञ्चिद्विश्रान्तिं दातुमिच्छामि। आ भानूदयान्मेषव्रजं पालयन् कृत्स्नं दिनं तिष्ठयेष क्षेत्रे। तत्र गत्वा मेषेभ्य ईषद्दीर्घतरं चरितुमवकाशमपि दास्यामि। ततश्च मेषयूथं गोष्ठकं नीत्वा द्वारं पिधाय च शीघ्रमेव पुनरागमिष्यामि।"

"यातु यथेच्छम्। आत्मानं रक्षितुमलमस्ति सा। नास्त्येषा स्तनन्धयी।" इत्यभाणीत् कृषीवलस्य वृद्धा भार्या।

"अये मा विस्मर यत्तपस्विन्या हामिदयायममूल्यनिधिरिय्यावयोः सर्वथा विश्वस्याजन्मतो रक्षणार्थमावाभ्यां समर्पितासीद्बालिकेयं किल। पितृगेहे न कदापि सा गच्छेदिति हामिदया निर्दिष्टं सूनोः पूर्वम्। अपि नाम वत्सायाः पितेहायात्। हामिदा गर्भिण्यासीदित्यपि स न व्यजानात्।" इति स्थविरेण प्रत्युक्तम्।

उपरि निर्दिष्टः संलापः कयोश्चिद्वृद्धदम्पत्योः कश्मीरेषु कस्मिंश्चिद् ग्रामे पान्पुरनाम्नि कृतावासयोर्मध्ये समवर्तिष्ट। तदाश्रयार्थमागता हामिदाभिधा काचिदङ्गना परित्यक्ता पत्येति षण्मासान् स्वगेहे ताभ्यां निवासितासीत्। वर्षोधोत्तरं सा प्रासूत कन्यामेकाम्। द्वादशदिनानन्तरे च तां स्वपालकाभ्यां समर्प्य प्राणान् जहौ। सा च बालिका मातृप्रेमामृतरसानभिज्ञा दम्पतिभ्यां प्राणनिर्विशेषं लालिता, सप्रेम संवर्धिता च पौत्रीनिर्विशेषम्। सेयं सरोजलोचना कुन्दकुड्मलदन्तपङ्क्तिः प्रवालाधरा चञ्चलालका शिरीषकुसुमकोमला शारदकौमुदीव रुचिरा धैर्यशीलापि मृदुवचना, धीरापि स्थिरमतिः स्नेहनिर्झरसंप्लुता दमयन्तीव परदमनशीला क्षमातलागता सुरसुन्दरीव कमनीया कृषीवलस्य क्षेत्रादिकार्येषु मुदा प्रयस्यन्ती सुखमास्त। कश्मीरीयाणामितरासां बालिकानामिव पान्पुरपल्लिका सुपरिचितासीत्तस्या अपि। विलक्षणोऽभूत्तस्या अनतिक्रान्तशैशवाया अपि स्वान्तर्बोधः किल। भाविविषयं पूर्वमेव सहजकल्पबुद्ध्या सा व्यजानात्, न च कदापि लुप्तधैर्यासीत्। दारिकामिमां सकृदेवावलोक्य तदीयहृदयङ्गमगुणरत्नसम्पत्तिं जनः क्षणादेवोपलक्षितवान्। जायापती स्थविरौ बालिकेयमतिशयितप्रेम्णानवरतं सेवते स्म। प्रतिदिनं परिणतवयस्केन कृषीवलेन सार्धमसमा मेषव्रजं रक्षितुं क्षेत्रं याति स्म। परमद्य सन्धिवातकारणाद् गेहान्निर्गन्तुं नाशकद्वृद्धः। यदा यदा हि स स्तोकमात्रमप्यस्वस्थोऽभूत्तदा तदा वत्सेयं मृदुवचसा तस्य बहिर्गमनमरुणत्। क्षेत्रपतिं विश्रमयितुं तावदहमेव क्षेत्रं यास्यामीत्यभ्यधात् पुनः सा सनिश्चयम्, जीर्णं स्थितस्य पितामहस्या-

गायन्ती मन्दं मन्दं सुखमास्त। समीपवर्तिनि जलाशये सरोजवृन्दं निशागमनाशङ्कया मामिम्लानत्वमधात्। क्लान्तकूजत्कपोतकुक्कुटादिपतत्रिणः स्वस्वकुलायान् सान्द्रविटपगतान् समाश्रयन्। दिनमणिः प्रतीचीं तत्रिगमिषुः प्रसारितकोमलकरैर्मार्दवं भेजे। सर्वत्र शनैः शनैर्निर्मक्षिकं सञ्जातम्। हेमन्तर्तुवशादूर्यिष्ठाः प्रवासिनो ग्रामनिवासिनश्च शैत्यस्यातिरूक्षतामसहमाना देशान्तरं प्रायेण व्रजन्ति स्म। तस्मात् पांसुलमार्गेऽस्मिन् ग्रीष्मर्तुवद् यानानि नावालोक्यन्त सम्प्रति।

अथेल्लामथाद्दनाम्नो ग्रामस्य दिशः समायान्तमस्मा सहसा कस्यचित् पुरुषस्याकारमद्राक्षीत्। कृत्रिमसन्त्रासेनोद्विग्नेव विनोदयितुमात्मानमिव च सपदि गुल्मान्तरितविग्रहा तस्थौ। अनुकूलस्थानात्तस्मात् समीपमागच्छतोऽध्वगस्याकृतिमधिकाधिकस्फुटीभूतामपश्यत्सा सकुतूहलम्। नचिरात्स पुरुषोऽन्तिकं सम्प्राप्तवान्। निबिडगुल्मावृतां मां द्रष्टुं न प्रभवेदेष इति प्रतीता वर्त्मनो मध्ये तमुपविशन्तं ददर्श विश्रब्धं च स्थितवती वत्सा। पञ्चत्रिंशद्वर्षीयः पथिकः परितो दृष्टिमाक्षिप्य कञ्चुककोपतो नाणककोशमपाकर्षत्। पुनश्चैवस्ततो वीक्ष्य धनराशिहस्तो गणयितुमारब्ध। क नाम हस्तगतधनराशिः प्रत्यासन्नरजन्यां गन्तुं प्रवृत्तः स्यात्पुरुषोऽयमिति दारिका व्यचिन्तयत्। नचिराद्धनसञ्चयं कटिबन्धने गोपयामास पान्थस्ततः सोच्छ्वासं समुत्थाय पुरश्चचाल। शीर्णसुरालयकोणपर्यन्तं दृष्टिगोचरी भूत्वा क्षणाददृश्यतां गतः। म्लानप्रभायां तस्यां जर्जरायतनमिदमौपद्रुतपिशाचसादृश्यं भेजे।

तदनु विश्रब्धमस्मा शिलासनं प्रत्ययासीत्पुनश्च ग्रथनकर्मणि निमग्नाऽभूत्। स्निग्धस्थविरौ क्षेत्रादिकार्याणि च ध्यायन्त्यास्तस्याः कस्यचिन्मेषशावकस्य रेभणं सहसा श्रुतिपथे न्यपतत्। सपदि सोत्थाय क्लान्तशावकं स्वबाहुभ्यां समुद्धृत्य चुचुम्ब समार्दवं प्रेमास्पदीभूतं तं मानुषनिर्विशेषमिव। "अपि निद्रालुस्त्वं वत्स। अलं खेदेन। नेष्यामि सत्वरं त्वां शयनम्।" इत्युक्त्वा मृदुलवाचाऽवशिष्टान्मेषान् एकीकर्तुं शीघ्रशब्दमकरोत्। समीपवर्तिनं गोष्ठकं प्रतियान्तीं तामन्ये मेषा अन्वगुः। नचिरात्तया विश्रान्तिस्थलमिदं निवेशितकृत्स्नमेषवृन्दं तालकबन्धेन पिहितम्।

अथापराह्णान्वीक्षमाणो रजनीनाथो रजन्या समगंस्त। दिष्ट्यासीद्दारिकाया मञ्जूषायामग्निशलाकापेटिका। यावच्च सा मार्तण्डदेवतालयमुपागात् तावत्पुरुषयोर्द्वयोः सवेगं विवदमानयोः स्वरध्वनिस्तस्याः श्रुतिपथे न्यपतत्। केनाप्यनर्थेनावश्यं भवितव्यमत्र तथापि न मया धैर्यं त्याज्यम्। उद्देशस्यास्य परिचयात्समीपवर्तिनः कस्यचित्पुराणचिनारतरोरवस्थानं तस्याः स्मृतिपथं समायात्। विशालद्रुमस्यास्य प्रचण्डकोटरस्तदाकृतिसमानं वपुस्त्रयमपि सम्यग्गोपयितुं पर्याप्त इति व्यजानात् सा। निःशब्दं च तस्मिन् कोटरे ससर्प। अपि भवेतामिमौ भयङ्करौ पुरुषाधमौ। प्रायः वायव्यप्रान्तवर्तिनौ पापिनौ स्यातामिमौ। एतादृशो दुष्टात्मनोऽधिकृत्य पितामहोऽसकृदभाषतेति स्मरन्त्याः कोटरस्थितायास्तस्याः श्रुतिपथे न्यपतत्पुरुषयोरेकस्य वचनं यथा—" अत्रैव खनित्वा निक्षेप-

मेतद् यथान्ये न पश्येयुरि" ति । कम्पमाना दारिका व्यचिन्तयत्कुतोऽमू नाम संरम्भेण कलहं कुरुतः । प्रायः कस्यापि ताभ्यां निहतस्यार्भकस्य वपुरुद्दिश्य विवादेनानेन भवितव्यम् । अनयोः पुरुषयोर्नैदिष्टापि सुरक्षितेत्यात्मानमभ्यनन्दत सा । स्वरक्षणार्थं च परमात्मनि धन्यवादपुरःसरं कृतज्ञतां मुहुर्मुहुर्हृदन्तरे समुदैरयत् । नचिरात् सर्वत्र निःशब्दता व्यराजत । वल्कलाच्छादिते कोटरे प्रह्वीभूता कुमारिकेयमपसरत्पादशब्दमाकर्णयदचिन्तयच्च । अप्येतौ नु चलतः प्रति सद्मेहम् । नहि नहि व्रजतोऽमू प्रतीपदिशेति प्रतीता निरुच्छ्वासं किञ्चित्प्रत्यैक्षिष्ट । ततश्च निपुणं कोटरतो निःसृत्य देवालयं यावत्प्राविशति तावदव-गुण्ठितार्तनादमश्रौषीत्सा । तस्थौ च स्तब्धा मुहूर्तं विचिन्तयन्ती । कस्यचिदसह्यवेदनार्दि-तस्य स्वनेनानेन भवितव्यम् । पितामहो मे न मर्षयिष्यति दुःखितजनाय साहाय्यं न दीयते चेन्मया । स हि नित्यमेवाज्ञातजनपरिचरणपरोऽस्ति । इति विमृश्याप्रमत्ता तदुद्देशं निभृतं प्रत्यागमनोद्यता सातिश्वासनिरोधकं स्वनमश्रौषीत् । आर्तनादोऽप्यभूदुच्चादुच्चतरः । प्रज्वलितदीपशलाकयाद्राक्षीत्सा पञ्चत्रिंशद्वर्षीयं पुरुषमेकमग्रतः । धनमुद्रापत्राणि गणयन्नचिराद्योऽवलोकितस्तया स एवासीत् पान्थोऽसौ । चीवरेण मुखमस्य निरुद्धं शरीरं च देवागारस्य स्तम्भे स्थूलरज्ज्वा गाढं नियद्धमासीत् । अप्येष परमार्थत एव दुःखार्तः स्यादाहोस्विद्दस्युरिति विशङ्कमाना मुहूर्तं निस्पन्दं तस्थौ सा । ततः क्षणमात्रं विमृश्य शङ्कां च दूरीकृत्य निबद्धपुरुषविमोचनपराभूत् । रज्ज्वा ययायं स्तम्भे न्यबध्यत तस्या ग्रन्थीन्निपुणं स्वकररुहाग्रैर्विश्लथयितुं प्रायतत । बहुलायासवशात् पान्थस्य गुरुकायः सरभसं भूमौ न्यपतत् । अपि मृतोऽयमिति जिज्ञासया सा विनतवपुस्तदुच्छ्वासं शुश्रुवती । यद्ययं दस्युः स्यात् तदस्मद्गृहे भयावहजनस्य प्रवेशो न खलु शुभावहो भवेदिति श्वासं निरुध्य विमर्शयोर्मध्ये दोलायमाना मुहूर्तं चिन्ताकुला स्थितवती । प्रायः किञ्चित् स वक्ष्यतीति प्रत्यैक्षत । परं तदार्तस्वनमेवाशृणोत् सा केवलम् । परमवेदनया ध्रुवं पीडितोऽस्तीति प्रतीता च तत्क्लेशं प्रशमयितुं निश्चिकाय ।

अथ तं निपुणमुत्थाप्य शनैः शनैर्मार्गे प्रवर्तयितुमुपाक्रमत धैर्यशीला दारिकेयम् । स्निग्धौ पितामहौ संक्षोभकृत्समिदं सकौतुकमाकर्णयिष्यत इति मनसा कल्पयन्ती भूयिष्ट-महसत् सा । इतः परं पितामहो न कदापि मामेकाकिनीं बहिर्गन्तुमनुमंस्यते पितामही च मत्साहसगुणागुणं विजानती शिरः कम्पयिष्यति केवलमिति वितर्कयन्ती चिरेणासद-द्विजालयं कथमपि क्षताङ्गेन पान्थेन सह । चिरात् प्रवयाः कृषिकः स्वनिकेतनस्य द्वारि चिन्तापरीतस्तिष्ठन्नासीत् । पर्यन्ते तमिस्रायां पथिकं कंचिदाकर्षन्तीं वत्सां निशाम्य तस्य गलदश्रूणि स्थैर्यमापुः ।

*अथाध्वगः समादरेण तस्यां शुश्रूषितः परिसान्त्वितश्च वृद्धाभ्यां कृतातिथ्यः कुट्यां स्थितवान्विश्रब्धो निशि । परेद्युरसौ दर्शं दर्शं साक्षात् कामप्यमानुषीं पश्यन्निव क्षणं स स्तब्धोऽभूत् । पश्चात्तस्या मृदुवाचं श्रावं श्रावं सहसा स प्रोच्चैरुदगिरत् "अयि हामिदे! हामिदे" इति । भ्रान्तचेतसं तं मन्वाना तस्य सान्त्वनार्थकं वचः सोपहासं वृद्धाभ्यां पालिता*

निवेदितवती । अनर्थपरम्पराभिभूतः सङ्ग्राहारिकयाभिरक्षितो द्वित्रैर्दिनैः प्रकृतिमापन्नः परमकृतज्ञताकुलस्तस्यै धन्यवादान्मुहुर्मुहुर्व्यतनीत । धनविनाशं न मनागपि व्यचिन्तयदध्वगोऽयम् । वत्साया अपरिमितगुणाकृष्टहृदयस्तयामितोपकारभाराक्रान्तो विस्मयस्य परां कोटिमारूढस्तामालोकयन् सामिपरिम्लानस्मृतिपरम्परया भृशमाकुलोऽभूत् । इतो निर्गमात्प्राङ् मयावश्यं बालिकायै किमपि पारितोषिकं प्रदेयमिति मनसि कृत्वा स्वमहानुभावं दर्शयितुं वृद्धकृषीवलजायामाचख्यौ । श्रीनगरमागम्यतां तावद् भवद्दर्शनसुखं च मे दीयताम् । गुल्लुनाम्नो नाविकस्य मे गृहनौका सर्वनागरिकाणां विदितास्ति खलु । तस्य सङ्केतस्थानं प्रख्यम् । भवदीयपौत्री यथार्हमुपग्राह्यं प्रदास्यते मया । अथास्मन्ना वीर्यं प्रत्युक्तम् । श्रीनगरमतिदूरस्थं चलितुमक्षमोऽस्मि मे पितामह इति । पथिकस्तास-पाङ्गदृशा विलोकयन्नवदद् भवतीं भवत्पितामहं च नगर्यामानयनाय तरणीं प्रेषयिष्यामीति । तन्निमन्त्रणमवगणय्य प्रत्यपि तूष्णीं स्थिते पान्थो व्याहरत्पुनः । गतभार्योऽस्मि । अनपत्या-मीन्मद्गेहिनी । तस्या वन्ध्यतयातिकुपितस्तां सार्धत्रयोदशवर्षेभ्यः प्राग्गृहान्निष्कासित-वानहम् । नान्यां च कन्यां परिणीतवान् । सन्ति मत्सन्निधे द्वे गृहनौके पञ्च तरण्यश्चेति ।

पान्थस्यावशिष्टकथानिवेदनं नावश्यकम् । सोऽयं सार्धत्रयोदशवत्सरेभ्यः प्राक् शरणागताया हामिदाया भर्ता पौत्रीकृताया अस्मायाश्च जनितेति झटिति स्थविरौ तर्कयामासतुः । अनेन च तावुभौ किंचित् सम्भ्रान्तौ बभूवतुः । तदनु गल्लुः सानुमर्द स्मेराननो बभाण । भवत्पौत्रीनिमयेन रूप्यकाणां शतद्वयं प्रदातुमिच्छामीति । कोपाविष्टेन कृषीवलेन प्रत्युक्तम् । दीयतां तदनं गोक्रयमूल्यार्थमिति । पथिकस्य सुस्थितिं क्षणात्तर्कयामास कृषिकः । तदनु प्रवासी पुनर्वक्तुमारभत । मा कुपः कन्येयमवाप्स्यति सर्वमेव स्वाभीष्टम् । न कदापि तस्या अपकरिष्ये । मिष्टान्नेन तां पोषयिष्ये योरुसारा-देशोत्पादितदुकूलैर्वररत्नखचिताभरणैश्च तद्वपुरलङ्करिष्ये । अनपत्यस्य नयनयुग्मं मे नन्दिनी तव प्रायो जनितनन्दनेनानन्दयिष्यतीति ।

सञ्जातकुतूहला निस्स्यन्दन्ती प्रवासिनमेव एव मे पितेति न खलु व्यजानादसा । कृषीवलस्य पत्नी तस्य वचनमाकर्ण्य भर्तुः कर्णेऽजपत् । कथं परिणेष्यविजात्मजाम् । अभुक्तमेवेति कथय तस्मा इति । स्थविरो दोलायमानमानसः स्थितः । व्यचिन्तयच्च वत्सायाः प्रभव एतस्मै निवेदनीयो न वेति । परमासन्नमृत्यवे हामिदायै प्रतिश्रुतमासी-दावाभ्यां यन्न कदापि बालिकेयं तत्पितृसकाशं प्रेषयिष्याव इति । तथापि वत्साया अन्वयो यदि पान्थाय न कथ्यते तर्हि तस्या यावज्जीवं सुस्थितजीवनसौख्यमपहरिष्यते खलु । इति विमृश्य कृषीवलोऽवादीत् । नेयं भवते देया । केनचित्कुमारेण हि तस्या विवाहवादनिश्चयः कृतोऽस्तीत्युक्त्वा भार्याया बाहुं कूर्परेणास्समचालयत् । अथ स्वहृदयौदार्यमाविश्चिकीर्षुणा पान्थेनाभिहितम् । निवसतु सा तर्हि दुहितृभावेन मद्गेहे । पञ्चशतं रूप्यमुद्रा दास्यामि भवते । मृत्युवक्त्रात्परित्रातोऽस्मि तया । तस्या भावी भर्ता मयाविष्को भवत्विति ।

प्रवयाः कृषीवलः पुनर्विममर्श मनसि । उपन्यासोऽयं प्रशस्तः खलु । सर्वथा नोचितं भाविसौख्यमपहर्तु बालिकायाः । अथात्मगेहिनीं पुनस्तत्कर्णे जपिष्यन्तीं कूर्परेणास्पृशत् तूष्णीं तिष्ठेति च तां व्यजिज्ञपत् ।

अन्ततः सदसद्विवेकनिपुणोऽपि स्थविरो वत्सामेव निर्णेतुमाज्ञापयत् । अथात्यन्तगाढप्रशान्तता व्यराजत प्रकोष्ठेऽस्मिन् ।

कृषिको भार्याद्वितीयो निरुद्धश्वासो मुहूर्तं जोषं तस्थौ । पान्थश्च सोत्कण्ठं पुरोऽवलम्बमानो दारिकाया वचोऽशृणोत् । दीयतां पञ्चशती रूप्याणामर्हते जनायान्यस्मै । यत्र मे पितामहस्य पितामह्याश्च निवासस्तत्रैव समुचितो ममापि । विद्यते हि दिष्ट्या पर्याप्तं धनमेतयोः सविधे मत्पोषणार्थमिति सनिश्चयं प्रोच्याग्रे च सपदि संप्लुत्योच्चैः स्थविरकृषीवलस्याङ्के सुखमुपाविशत् । सहसा विस्मापितो गुल्लुस्तां निरीक्षमाणस्तस्थौ । निलोकालका बालिका साभियोगं च पथिकमालोकयत् । अनेकसङ्कल्पविकारपरम्परया तस्य चेतः संप्रथितमभूत् । विवर्णवदनः शिरः कम्पयंश्च द्वारं प्रति चलिष्यन्नभ्यधात् पथिकः । अयि भोः परवस्तुलोभेन किम् । मदीयभार्या हामिदा यदि वन्ध्या नाभविष्यत्तदावयोरप्यसमासमानरूपगुणादिसम्पन्नाभविष्यद्दारिका । इति सदर्पं समुदीर्य श्रीनगरस्य विजनेनाध्वना स्वगेहं प्रति सायासं प्राचलदध्वगः ।



रोगोपशमः संभवेत् । परं हन्त रजन्यामेवाप्स्यते कालनिमन्त्रणं तस्मादवश्यं सज्जीभाव्य-मनिष्टव्यतिकराय खलु । भद्रे ! ईश्वरेच्छा बलीयसी । दैवनियोगमुल्लङ्घयितुं कः पारयेदिति पाणिद्वयं संघट्य मृदुस्वरेणाब्रवीद्वैद्यः । अहो भिषग्वर्याः परित्रायन्तां परित्रायन्तां भर्तृपादाः । नास्ति शरणमन्यन्मे तान् विना । इति सकरुणमुदीर्योर्मिला भाविविपद्विभावन-संत्रासग्रस्यमाना भाविदारुणस्थितिकल्पनाखिन्नानना भिषजः पादयोर्निपत्य गाढं तौ पाणिपल्लवाभ्यां निराशाकुला समपीडयत् ।

" अलमलं खिन्नातिरेकेण । जानात्येव भवती यथाशक्ति सर्वोपचाराः कृता आवाभ्याम् । इतः परं परमात्मैव प्रमाणम् । तदिच्छाधीनैर्भाव्यं मर्त्यैः " । इति तामुत्थाप्य सानुकम्पमुपादिशद्गदङ्कारः ।

" भवतु, भवतु । अपि न किमप्यन्यत् कर्तुं शक्येत ? " अप्राक्षीत्सा पुनः पुनः । तस्या म्लानीकृतदन्तपंक्तिर्विवर्णाननं च परिदेवनोद्रेकमसूचयतां स्फुटम् । नेति नेतीति प्रोच्य शिरो विधूय च तूष्णीं स्थितवान् भिषक् । नेति नेतीत्यक्षरद्वयवाग्ध्वनिश्च न्यपतत्तस्याः श्रुतौ मृत्युघण्टानिनाद इव । ततश्च तावुभौ पितृवनसंवासिन्या निःशब्दतया समाच्छादि-ताववास्ताम् । नैराश्यजलमहोदधावूर्मिला नेत्रीयस्यासने निमज्ज्य दुःखार्ता पुरतो बद्धदृष्टि-स्तूष्णीं तस्थौ । अथ सहसा चमत्कारि प्रशान्तताच्छविः शीघ्रविमर्शजन्या समुल्लसति तदानने तावत्सा चिन्ताभारनताङ्गीवाधोमुखी तस्थौ । अगदङ्कारो निःशब्दं तदन्तिक-मुपसृत्य विष्टरस्य पृष्ठभागमवलम्ब्य च तत्कर्णेऽजपत् । वत्से ! समाश्वसिहि ! समाश्वसिहि ! अद्य रात्रौ स्वल्पमपि सेवनीयमशनं भवत्या । इति फलके स्थापितं माध्याह्निकानास्वादित-भोजनसंभृतं पात्रमङ्गुल्या निर्दिष्टवान् । संभ्रान्ता सा तद्वचनमश्रौषीत् । परस्ताद्-भेषजचूर्णं स स्वकीयमञ्जूषात् समुद्धृत्य निःस्वनं द्वारमपावृत्य च मन्दिरान्निरगात्कौमुदी-धवलितायां विभावर्यामगदङ्कारः ।

अथ कुट्टिमसन्नद्धं शयनागारं पितृकाननस्य भीषणतामभजत् । प्रतिक्षणं कोणस्थो दीपो निर्वीर्यप्रभामधरत् । गन्धवाहो गृहाद्बहिः सपूत्कारं क्वचिदाक्रोशन्क्वचिद्विस्वरमवहत् ।

अथ भयानकनिःशब्दतायां तस्यां पत्युर्हरिद्राद्रवस्नापितमिव पाण्डुरमुखं दर्शं दर्शं गमनेऽश्रान्ति चेष्टितं भिषजो वचनं मुहुर्मुहुश्चिन्तयन्त्यास्तस्याः शरीरं सवेपथु समजनि । अहह प्रिये किं नाम कृतं मयेह जन्मनि यदेकमात्रशरणभूतं मम प्राणेश्वरं मय्येव बद्धानुरागं मत्तो निष्ठुरमाच्छेत्तुमुद्यतोऽसि । केन घोरपातकपङ्कपङ्केन कलङ्कितास्मि यन्मम जीवनसारमाजिहीर्षुरसि । भाविदुस्सहापदमुत्प्रेक्षमाणां मां वराकीं कोकीमिव कोकाद्विर-हिताममुत्प्रेक्ष्य तावत्स्वैरं रुदतीं द्रष्टुं कथं त्वं सहसे । नास्ति ते हृदि करुणालेशोऽपि लोकदारावारे निमज्जन्तीनां मादृशीनामबलानां विषये । इति चिन्तयन्त्यास्तस्या अन्तरात्मनि चिरदग्धुनियो निमग्नविप्लवो विवेकोत्थितेन सह महत्संख्यं समजनि । उद्वेगमन्दायमानविवेकवेदनायास्तस्या मनस्येकस्वरोक्तिरेवास्पन्दत । यथा । नास्त्येकम-न्तरेणान्यो मार्ग इति । साश्चर्यमात्मनि निर्धारयन्त्यास्तस्याः प्रतिक्षणं विविधविचारोर्म्य-नुसारेण चपलया नयनयुग्मं सपदि परिवर्तनं भेजे । तथा हि । क्वचिदायतविस्फारितं,

क्वचिद्विद्विषद् द्योतमानं क्वचित्कर्कवितर्कगाम्भीर्यं तदभूत् । नास्त्येकमन्तरेणान्यो मार्ग इति क्रियासमभिहारेण प्रजल्पन्ती सावधानं विमर्शपूर्वकं सूत्रयुक्तिकया यष्टयुच्छिन्नपदविडम्बिनी सा शयनागारस्यैकस्मिन् कोणे स्थापितामौषधमञ्जूषामुपेतवती । तमीतमित्रे समेधमाने पराभूतदुर्मिला काचकूपीसञ्चयं पातययामीत्थं कूपीमुपालप्सीच्च । एकापोतनमात्रेणालं स्यादिति निश्चित्य समीपस्थे फलके कूपीं निधाय गवाक्षं प्रति च पुनर्गत्वा स्वैरालोकमालोकयन्ती लोललोचना सा समतिष्ठत । अत्रान्तरे वृत्ततमलोहितकन्दुकं निजकिरणधारास्नापितसान्द्रवेदस्तम्बुवाह्नयादिवनद्रुममालारण्यं देदीप्यमानं गगनपयःप्रचयेऽवलम्बमानमासीत् । मरुत्कम्पितमहीरुहसमूहस्य सूत्कारस्वनेन पूरितमभूद्दिगन्तरालम् । इन्द्रनीलच्छायास्यां द्योतमानतारकैर्हीरकमणिभिरिव मण्डितं व्यराजत । क्वचिद्रजनीकरकरनिकरविरोचितां भूमिं, क्वचिद्दूरस्थमपि दृष्टिगोचरं प्रतानदुर्गप्राचीरं, क्वचिच्चाङ्कपान् मुख्यामकूटविशेषान् विलोकयन्ती समयं कथञ्चिदतिवाहयाम्बभूव । प्रस्फुरच्चन्द्रकलाकलिकाविलोकनेन झिल्लीभ्रमरादिझंकारनिशामनेन, समुन्मीलितमाध्वीकुन्दादिकुसुमसुगन्धघ्राणेन, वन्यपाटलपल्लवरागपुञ्जसुरभितविलोलशीतलसमीरस्य संस्पर्शनेन, सान्द्रद्रुमनिकरेषु वह्निकणदीप्तिशिखरखद्योतद्युतिविलोकनेन, पयःफेनसारच्छविमत्या ज्योत्स्नया धवलितस्य समीपवर्तितडागस्यावलोकनेन, द्विगुणितविषादाऽभूदूर्मिला । नेदीयसो गिरेर्मूलपादे मधुरस्याः फलवृक्षवाटिका 'परिणतफलसंपदपि त्वनाथस्य विप्रयोगादिवानाथीकृतेव विषण्णेव स्थितवती । तरुसंदोहस्य पेलवाम्लपल्लवपुटो विविधवर्णैः पर्णैः सान्द्रच्छायया च मृदुशीतलानि वर्त्मानि परिप्लावितानि । काचिदपि गृहपालिका धूमपुञ्जेष्वन्तर्लीना प्रत्यभात् । शलभसमूहस्य झगत्कारशब्देन प्रशान्तनिशायां वैचित्र्यमेव समुदपादि । लिङ्गमालानाम्न्यां श्वेतार्धकर्णैर्न्यां वाटिकायां जलप्रपातस्यानवरतगर्जितं दिगन्तं परिपूर्य चिन्ताचरमाक्रान्ताया ऊर्मिलाया निरानन्दावस्थां समवर्धयत । नेदीयसो ग्रामाद्विवाहोत्सवनिमित्तेन क्वचिद्वीणामृदुस्वरः क्वचित्पटहभेरीमृदङ्गादिनिनादश्च भेजतुः कर्णमार्गं युवत्याः *कर्णाकुलयोः* । 'हन्त ! सुभूरि हृदयेश्वरे कथं नाम निर्दयं जनेनानेन सुप्तमुरसुप्येत । सदयया चन्द्रिकयापि मामनुकम्पमाना मन्दमन्दमुर्धियांप्लोदकं गोप्तुमिव मेघान्तरेण मानमवगुण्ठ्यति' ।

इत्येवमुत्प्रेक्षमाणायां तस्यां शयनागारस्य द्वारं समुद्घाट्य सायन्तनभोजनसंभृतं पात्रमानीतवान् सेवकः । विधूतशिरसा तया भोजनं नावेक्ष्यत इत्युद्दिष्टेनैव निर्दिष्टो वाहकः क्षणं व्यलम्बत ततो दीर्घं निःश्वस्य निःशब्दमपाक्रमत् । क्षणेऽस्मिन् रजनीकरस्य मन्दप्रभाविरोचितं वनमालोकयन्त्यास्तस्या व्यतिक्रान्तघटनासरणीमेका पूर्वमनुभूता सुन्दरी धवलसुधाकरसुधाधाराधवलिता विभावरी व्यतीताब्दस्य यस्यां सा सभर्तृद्वितीया देवदारुच्छायावृतपरम्पराणां पक्षिकुलकूजितं मधुरमधुरमगणयन्त्येव प्रेयसः सार्धं सार्धं विहारं करोति स्म । तत्र च सस्मार सा कञ्चित् त्रिविष्टपदेशीयं तापसं सुधागस्तुपंचयहस्तं रजनीसमये पर्यटं पर्यटं समायातं तयोः सन्निधम् । वस्तुतस्तु तस्यामीदृशी पुरातनी कुलीनाक्षी कृपालिका । 'भद्रे कृपालिकाया भंत्रितायां अस्या मैत्रगुणगणेन युवयोरद्य

शुभमेव भविष्यति'। इति प्रतिज्ञाय तदर्थं ताभ्यामुपाहृतधान्यप्रस्थः पुराणवस्तुकोविदः। कृतज्ञतया च तापसस्योपायनं स्वीचकारोर्मिला। अथ ध्यायं ध्यायमिदानीं तदलौकिक-पारितोषिकं गवाक्षतः परिहृत्य च शयनागारस्य सुधालिप्तभित्तिकां अभ्युपासरत्। कोणस्था पित्तलपात्रगतदीपिका सामिनिर्वापिताऽऽसीत्। तमीतिमिरकर्तनक्षमं शाणोल्लीढं भित्ताव-लम्बितं रत्नखचितरजतकोषच्छन्नं निःस्त्रिंशं समुदलोलयत् सा। 'भद्रे, कृपाणिकाया मंत्रगुणगणेन युवयोः शुभमेव भविष्यती'ति तापसस्य वचनं मुहुर्मुहुः प्रजल्पन्ती क्वचित्सनिःश्वासं सपुलकं तामस्तौषीत्, क्वचिदस्मयत, क्वचिदकम्पत, क्वचित्तामनिन्दत्, क्वचित्तां व्यकम्पयत्। 'किं शुभमकारि मे कृपाणिके त्वये'ति सोपालम्भमुदीरयन्ती सतिरस्कारमुन्मत्तप्रायेवोच्चैरुपाहसत् सा। 'अहो! विश्वासशीला मायाविनानेनाविश्वस-नीयेन सकैतवं प्रतारिताऽऽसं किल'। इत्यात्मने कथयन्त्यास्तस्या मनोभित्तिकायां सहसा काचिदभिनवकल्पना प्रादुरभूत्। 'किमेषा कृपाणिका मत्प्रयोजनं सफलत्वं नेतुं प्रवृत्ता स्यान्मे। शीघ्रतरमेव कार्यनिष्पत्तिर्भवितेति न संदेहलेशः'। इति विभावयन्ती खड्गस्य पत्युरन्तिकमुपेत्य क्षणं तस्य निःशोणितं वदनं न्यरूपयत्। 'परं यदि सुदैवात्प्राणे-श्वरः पुनः स्वस्थो भवेत् तत्किमनया। नहि नहि न तत् संभावनीयम्। हा! भिषजो मुखावलोकनेन, तस्य स्वरशब्दविन्यासचेष्टितैश्च व्यतर्कि मया यदतिक्रान्तरोगोपशमाशः प्राणेशः सांप्रतम्। स्वल्पघटिकाभिरेव मज्जीवनप्रयोजनं पर्यवस्यतीति मनसा निर्धार्य सरभसं परावृत्य मुहूर्तं शयनागारे प्राचलदितस्ततः। परस्तात्तु निरुद्धक्रन्दना गृहीतकृपा-णिका शयनस्य समीपवर्तिविष्टरे स्खलितगात्री न्यमज्जत्। नचिरादवर्णनीयमहानन्दनिमग्नेव निरपेक्षेव विस्मृत्यात्मानं चिराय जागरणोपोषणादिक्लेशैः शिथिलगात्री दयितस्यानने बद्धदृष्टिस्तूष्णीमास्त। क्षणोत्तरं स्वापोत्थितेव सहसा स्फूर्तिस्फुरितगात्री किंचित्स्मेरानना वामहस्तेन मंगलसूत्रस्रजमास्पृशन्ती वामेतरेण च कृपाणिकां गाढमुरसि निपीडयन्ती पिहितलोचनयुगला कस्मिंश्चिदज्ञातप्रदेशे पर्यटन्तीव विस्मृतसांप्रतिकपरिस्थितिरिव ध्यान-मग्नेव निश्चला वितस्थे। गृहाद्बहिर्न मण्डूककदम्बस्यारटनं न वा झिल्लिकानां झंकारो न वा निशीथसमयसूचको घण्टानादो विस्मृतात्मदेहायास्तस्या गाढप्रशान्तिं मनागपि व्यच्छिनत्। अथास्तं याते यामिनीधवे गाढान्धकारेण कज्जलरेणुपटलेनेव बहिःस्थवनप्रदेशो व्याप्तः स्थितः। शय्यागारं तु दीपिकायां निर्वापितायां सान्धकारप्रायं समभूत्। अथ कतिपयक्षणोत्तरं निवासस्य बहिरश्रावि पादन्यासध्वनिस्ततश्च कर्कशस्वनो मण्डूरदूषित-कपाटसंधेर्यावदुदघाट्यत द्वारम्। भयग्रस्तोर्मिला यावदात्मानं पृच्छति कोऽयं धृष्टो जनः शयनागारमावयोर्विस्रब्धं प्रवेष्टुं धृष्णोतीति तावत्कश्चिद्भव्यस्तापसवेषः श्यामवर्णो महोदारा-कृतिरवदातो महाप्रभश्च निःशब्दं प्रविश्य शयनशालां निमिषमात्रेण रोगिणः पादयोरन्तिके तेजःपुञ्ज इवोदगमत्। उज्झितक्रन्दना युवती मृदुगिरा साभिज्ञानसौहार्दं सस्मितं चान्वपृच्छत् 'अपि भवत्याऽहमाहूतः'। इति प्रोक्ता सा प्रतिपत्तिमूढेव केवलं शिरो न्यधूनोत्। तमालोक्याकस्मादेव संभ्रमपारावारकल्लोलविलोडितहृदया संत्रासाद्रोमाञ्च-कञ्चुकितशरीरा स्फुरिताधरा विस्फारितलोचनाभ्यां निजमानसिकविक्षोभमाविश्चकार सा

स्तुतम्। मुहूर्तं निजस्थ्यामपि न मा व्यधमीत्। ‘परं मन्यमेव केनचिन्महापुरुषेण भाव्यमनेन। अस्य शरीराकृतिः स्फुटमेव मया क्वचिद् दृष्टेव लक्ष्यते, एतत्स्वनश्च परिचित-जनस्येव श्रुतिगोचरः। क्वापि दृष्टपूर्वोऽयं मयेति निश्चिनोमि’। इति मनसि विचार्य दत्त-दृष्टिर्गृहागतस्य तस्य सुवर्णप्रभामण्डलमण्डितमाननं व्यलोकयत्। ‘भद्रे, मुहुर्मुहुः स्मृतोऽहं भवत्येति समायातोऽस्मि’। इति घनगर्जितगम्भीरस्वरेण स समुदैरयत्। अकस्मात्स्वर्गं चलितेव भयाक्रान्ता च निरुत्तराऽस्थादूर्मिला।

गृहाभ्यागतः—भद्रे! श्रूयतां मद्वयस्यस्यास्य च संभ्रमोऽयं सोन्मादः। कृपायं व्यापारस्त्वयेति विद्धि। चतुर्विधं फलं हि यथापूर्वं विधिना भागेवाक्लिष्टलिखितानि खलु।

इत्याकर्ण्य तदादेशं श्रमनान्त्वचेन परामृश्य च स्मितानन्नं ससंभ्रममब्रवीत्। ‘तोषयते जीवितुमितः परम्’। गृहागतः कृतार्थंतयेवास्मीत।

गृ—(साग्रहम्) भवत्या मुहुर्मुहुरत्यन्तं गाढं स्मृतः संन्ततोपचिकीर्षुः समुप-स्थितोऽस्मि। ममादेशं प्रतिपद्य क्षिप्यतामसुखम्।

ऊ—कस्त्वम्? कुतः समायातोऽसि? किं तवागमनप्रयोजनम्। किमर्थं पर्येष्टं न कुर्याम्।

गृ—यतो नीतिशास्त्रस्य विरुद्धं भवेदीदृक् चेष्टितम्। विधात्रा दत्तान् प्राणान् हि विनाशयितुं न कस्यापि मर्त्यस्याधिकारोऽस्ति।

ऊ—मम प्राणा मदधीना एव। न कोऽप्यधिकृतोऽस्ति मां वारयितुं संकल्पितकार्यात्।

गृ—अये नैतिकनियमान् न वेत्सि किम्? किमिति वाल्मीकिवचनेनात्मवधं निमुग्धतां गच्छसि। किमित्येवं ताम्यसि? कथंकारं खिद्यसे, शुष्यसि, म्लायसि च?

ऊ—अपि न श्रुतं भवता यत्पुरातनकालेऽस्मद्देशस्य लब्धात्मभूतानि स्त्रीरत्नानि पतिनिधनोत्तरं चितामारोहन्निति। तथापि तानि न कोपास्पदमभवन्, परं सतीमान्यान्यमरत्वमेव लेभिरे।

गृ—परं न केनापि मुनिना चेष्टितं तासामभ्यनन्द्यत।

इत्यभिधाय विस्मृतपाणिरप्रेक्षत। ऊर्मिला चाधिकं लज्जाऽमनाक्त्वर्थेव पाण्डुगण्डतलविसृत्वरस्वेदबिन्दून् वसनप्रान्तेन मार्जयन्ती वेपमानहृदया रुद्धकण्ठा च कथं कथमप्यात्मानं वशंवदं विधायाव्यक्तस्वरमसमर्थयेति।

गृ—किमर्थं तवोपचिकीर्षे कुप्यसि। तव पत्युः परलोकयात्रा निर्विघ्ना भवेदिति ममागमनप्रयोजनम्। मा स्म दुःखज्वालाभिर्विकचकुसुममिवात्मनः सुकुमारशरीरं धाक्षीः।

ऊ—सत्यमभ्येतत्। किं कुर्यां प्राणेशेन विना। स एव मे सर्वस्वं, तत्सान्निध्यमेव मे सुखं, तन्माहात्म्यमेव मे जीवितसारभूतं, तत्प्रेमैव मे धनं, तदास्यसुधापानमेव मे भोज्यं, तस्मिन् सति मे जीवनहेतुः। तत्किं व्यामिश्रयेव वाचा

मोहयितुं मामुद्यतोऽसि । कुतो मधुरमधुरैर्वाक्यैर्मच्चेतश्चञ्चलयसि । किमिति मां प्रतारयसि । *अयि दुःखदावदग्दह्यमानां मामालोकयतः कथं वै हृदयं वज्रादपि कठोरं मार्दवं न भजति ।*

गृ — [ अग्रतः समुपसृत्य ] भद्रे ! मर्त्यस्य जीवितं दैवाधीनमेव । दैवघटनायामलं शोकेन । तव भर्ता सह त्वया वर्षाण्यष्येव जीवेदिति चेद्विधिना प्रागेव निर्णीतमासीत्तदीश्वरेच्छावशंवदया भाव्यं भवत्या । को जानाति नियतेर्वर्तनाम् । यथा हि प्रायोऽनुभविष्यमाणतया संवृत्तं युवयोरुभयोरपि हिताय भवेत् ।

ऊ — आवयोर्हिताय ? किं नाम घोरतरं स्याद्विश्लेषादावयोः । न कदापि विवाहोत्तरं विरहदुःखं प्रतीतमावाभ्याम् । क्षणमात्रमप्यनवलोकनं हृदयेश्वरस्यासहमाना कथं तं विना जीवेयम् । अपि जानाति भवान् किं भविष्यति मे वल्लभस्य विरहात् । अहो सजीवं मरणमेव मे भविता । अहह ! मत्कण्ठरत्नहारोऽयं, मन्नयनानन्दः; मज्जीवनसारः खलु ।

इति सगद्गदं समुदीर्य शय्यामवलम्ब्य पाणिपल्लवाभ्यां पतिं च गाढमाश्लिष्य मुहूर्तं निश्चला समतिष्ठत तरुणी ।

*गृहा — भ्रान्तिरेव खलु प्रीतिर्मर्त्यानाम् ।. मायैव सा प्रतारयति मोहयति च मानवान् । न ह्येषा परमपदं तान् नेष्यति ।*

इति वदतस्तस्य लोचनतेजः क्षणं पक्ष्मभ्यामाच्छादितम् ।

ऊ — ( सोद्वेगम् ) कथम् । आवयोः परस्परप्रेम भ्रान्तिरित्युच्यते भवता ? नहि *नहि । तदेतत्तारामण्डलस्य वास्तविकत्वं बिभर्ति । अस्यापहरणान्मज्जीवनसारलोपो* भविष्यतीति विद्धि ।

इत्युदीरिते तया प्रकम्पनसंत्रासादिव सहसा मन्दिरस्य वितानमकम्पत । गृहागतस्य च तयो वचनसमाकर्णनजनितसंत्रासादूर्मिला वेपमानाङ्ग्यष्टिरस्थात् । ततश्च सतेजोमण्डलो भव्यपुरुष ईषत्स्मेराननस्तामुपदेष्टुं पुनरुपाक्रमत । 'प्रजात्मनो दुहितृवत्सलयोः पित्रोर्गेहमि' ति ।

ऊ — हन्त ! आ बाल्यादनाथया वाग्धैरमायबालिकाश्रमं प्रेषितया मया जननीक्रोडसुखं नानुभूतं न वा पितृलालनामृतरसः समास्वादितः किल । अथ संजाताष्टादशवर्षा द्विजेतरेण कृतपाणिग्रहणमात्रैकदोषाहं तिरस्कृता परित्यक्ता च तैर्बान्धवैः । अथ कस्यापि दुःखं निवेदनीयम् ।

*गृहा — प्रायो विवाहपूर्वमेवावगमनात्तैस्तव पाणिग्रहणमनेन तरुणेन सार्धं* व्यरुध्यत ।

इत्युपश्रुत्य तं नैर्ऋत्यामालोक्य विस्फारितनयनोर्मिला नवनीतकपोला चिन्तामहार्णवकल्लोलसंक्षुब्धहृदया चित्रलिखितेव जडीभूतेव व्यावर्तत ।

गृहा — भवत्याः सुखमन्तरेण नाचिन्तयन् किञ्चिदन्यद् बान्धवास्ते । तद्विरोधस्तव हितार्थैरप्यधर्म्यविध्वंसिनश्च सोपहासं वान्यपदवाच्याः । एवमेव विरहस्तव भर्तुर्दुःखदोऽपि मिथः सुखाय भवेत् ।

इत्युदीर्य स भव्यपुरुषः पुनर्निमील्य नयने तस्यै चिन्तनावसरं प्रदित्सुरिव क्षणं किञ्चित्पृष्ठतोऽपससार। ' नहि नहि ' इति पिहितकर्णौ सहस्तविक्षेपमूर्मिला चुक्रोश।

गृहा — भद्रे शृणु मे वचः। दीर्घकालो व्यतीतः किल समागतस्येह मम। अपरं कार्यमस्ति मे। सत्वरं गन्तव्यमितो मया।

इति सामिकर्णजल्पितां तद्गिरं समाकर्ण्य ' किं कार्यम्? कस्त्वम्? ' इति ललाटतट-मङ्गुलीभिर्निष्पीडयन्ती युवत्यब्रवीत्। तत्क्षणान्तःप्रेरितेव पवित्रभूता स्वैवाहिकमंगलसूत्र-मालिका स्वग्रीवायां सुरक्षितास्ति न वेति निश्चेतुमिव तां परामृशत्। तत्क्षणं क्रोडगता कृपाणिका नेदिष्ठासने न्यपतत्।

गृ — प्रथमं तावत्त्वोपकर्तुं साहसाच्च त्वामभिरक्षितुं समायातवानहम्। अतोऽ-धिकाख्यानेन किम्।

इत्यधिकाधिकमन्तिकं यावदुपैति तावदूर्मिला व्यलोकयत्प्रतिक्षणं भर्तुराननस्यैधमान-मृत्युसूचिकां पाण्डुरधूसरताम्। गृहाभ्यागतेनोपमर्दितस्य भूतार्थमवबुध्याकाण्डे भयमस्तो-कैस्तरामाचुक्रोश। “ मुञ्च मे हृदयेश्वरम्। जहाहि जहिहि जहीहि तम्। ” इति साम्रेडमभ्यर्थ्यत तया। “ अलमाक्रोशेन। न हिंस्यते मयासावद्यापि। ” इति पुनर्निग-दितो वीक्ष्य च क्षणं जोषं स्थितवान् गृहागतः।

अथ पुनस्तेनोदीरितम्। ' त्वद्भर्तुरन्तरात्मनैवास्ति मे विधेयं न तु तद्देहेन '। इति तद्वचनमाकर्ण्य शूलेनैव तुद्यमानकर्णौ सत्वरमाकुञ्च्य गलितगात्री सवेपथुर्वितस्थेऽसौ। स च समागत्य पाण्डुवदने दत्तदृष्टिस्तामुद्गमय्य कथमप्याकारयितुमिव क्षणं निःशब्दं तस्थौ। सा च साक्षेपं किञ्चिदुत्थाय समुपाविशत्पुनश्चासने संमर्पितहस्ता। ततश्च नमितजानुर्भूमौ समुपविष्टा बद्धकरपुटा सप्रश्रयं सगद्गदं च व्यलपत्।

ऊ — भगवन्! न करिष्ये किमपि साहसमिति प्रतिजाने। मुञ्च मुञ्च मद्दयितं, प्रसीद प्रसीद भगवन्।

गृहा — [ तां गम्भीरवचसा गतवृत्तं स्मारयन् ] उचितोऽस्तीह। बान्धवानात्मानं चान्तरेण स्वधर्मं मा विस्मार्षीः।

ऊ — किं विधेयं स्यान्मया। तं विना किं कार्यैः।

गृहा — स्वदैहिककार्यं तं प्रति, तन्नाम प्रति, तद्वंशं प्रति।

ऊ — हन्त! भगवन्! कथं तच्छ्रयं विना...

इत्यर्धसमाप्तवचनावसरोर्मिला भूमौ निपत्य मुक्तकण्ठं व्यरोदीत्। क्षणोत्तरमुन्मिलि-तनयनयुगला पत्युर्मुखं मृत्युच्छायावृतमालोक्य भयास्तम्भितगात्री बभूव। अकाण्डमबोधि तया यत्कृपाणिका निजहस्ताच्च्युतासीदिति। अन्विष्य च तामुपालभ्यासनस्योपधान-वसनान्तरे। ससंभ्रमं झटिति च सा तां बलाज्जग्राह। तत्क्षणं विलक्षणाकृतिर्गृहाभ्यागतः कानिचित्पदानि पश्चादचलत्। सन्दस्मितेन तस्य समाश्वासिता समुदतिष्ठदूर्मिला तस्य सम्मुखीभूय च भृशं कम्पमानदेहयष्टिरधोमुखी जोषं वितस्थे। अतिनम्रा शिरो

यावदुदनमयदियं तावदवासाशीर्वचनमिवात्मानमाकलयत् । अभ्यागतश्च स्तुतः परावर्तताधिकाधिकम् । तच्छिरोऽभितः पूर्णं देदीप्यमाने प्रभामण्डलमिदानीं शनैः शनैर्विरलमभूदस्फुटा च तदाकृतिः । पर्यन्ते प्रातःकालीनच्छायापटल एवालीयत ।

' एषोऽन्तर्गतोऽस्ती 'ति सहसा मन्दस्वरेणागदद्गुणः ।

अथ कृपाणिका सशब्दकारं भूमौ न्यपतत् । ऊर्मिला चाकस्मादासनात् सञ्चालितेव सपदि समुत्थायोपाविशत्तत्र करयोरङ्गुलीः परस्परं संयोज्य हस्तौ प्रसारयन्ती विच्छिन्ननिद्रेव मन्थरा प्रामार्क्षीदक्षियुगलम् । शयनागारं सहस्रकिरणरश्मिभिर्देदीप्यमानमासीत् । कपोतकुक्कुटशुकसारिकादयः पक्षिणोऽनवरतं गृहाद्बहिः किलकिलायन्ते स्म । मन्दिरस्यास्य वाह्यभित्तिलग्नाया मल्लिकावल्ल्याः परिमलः सर्वतो गन्धवाहेन विस्तारित आसीत् । ' यदि सन्तरिष्यति रात्रिमिति क्रियासमभिहारेणात्मनि ब्रुवाणा सरभसमूर्मिला शय्यान्तिकं पातितोभयजानु समुपाविशत् । तत्क्षणं रुग्णः समुन्मीलितनयनो मन्दमस्मैष । भावबोधपुरस्सरं तन्मुखमूर्मिला निरूप्य प्रेमपारावारपूरप्लावितान्तरङ्गा दयितस्य पाणिं मुहुर्मुहुश्चुम्बित्वा तं लोचनाम्बुधाराभिरस्नापयत् । तस्या म्लानशुष्काननमाशाङ्कुरेणोद्भासत । ततश्च सा प्रह्वीभूय कृपाणिकामुदतूतुलत । सोत्कण्ठं च तां पर्यचुम्बत् । युवत्या प्रहर्षोद्रेकेण देवतावदाराधिताऽभूत्कृपाणिका । पुलकोदञ्चितं शरीरमूर्मिलाया अभून्मनश्चोत्साहसुधासारैरभिषिक्तमिव समुल्लसितं समजनि ।

पञ्चषघटिकाभ्यः प्राग् वसुंधरा या मरुस्थलीव शून्यशून्येव भाति स्म सेदानीं प्रफुल्लजपाकुन्दयकुलमालतीमल्लिकादिकुसुमैः समुल्लसिता नन्दनवाटीवातिमनोहारिणी सा समानन्दपदमन्दत् ।

पतिव्रतानां पुण्येन किंवा न भवति क्षितौ ।



॥ श्रीगणेशाय नमः ॥

# ३. परित्यक्ता

इदं प्रथममेव मनागमनमासीत् कश्मीरेषु । उत्तरभारतालङ्कायमाना नन्दनवन-विडम्बिन्यः कमनीया मरकतोपत्यकाः प्रथममेव मया निभालिताः । आगामिवर्षाकालस्य पारुष्यमधिकृत्य प्रागेव बहुधा बहुभिः प्रबोधितोऽपि कोहालाख्यग्रामादारभ्य पञ्चविंशतिं योजनानि सृष्टिसौन्दर्यदिदृक्षासहकृतकौतुकसन्नद्धचेता अहं मार्गदर्शकद्वितीयः पादचारेणैव गन्तुं प्रावर्तिषि । मार्गदर्शकस्तु कश्मीरदेशपरिचितस्तत्रत्यजनाचारविचार-सरण्यादिविषयनिष्णातश्चासीत् ।

अथ कोहालाग्रामात्प्रभृति नैकसहस्रं पर्यट्य बारामुल्लाभ्यन्तरं ग्रामं, वितस्ता-देवीविशालतरङ्गमर्दि, रम्योपत्यकया रम्यतरोपत्यकं, महाजलप्रवाहान्महत्तरजलप्रवाहं पश्यन्तौ चाहिण्डमानौ बारामुल्लानाम्नो ग्रामान्नातिदूरमावां सायं सम्प्राप्तौ । अथ सहसा समुत्थितो झञ्झावातः । तडितः कडकडाशब्दैरतिभीषणैर्बधिरीकृतं दिङ्मण्डलम् । ज्वालामुखसहोदरमीदृग् विद्युद्विद्योतनं न मयाऽवलोकितपूर्वमासीत् । प्रभञ्जनस्य प्रलयकालीनस्येव प्रचण्डतायां पतितौ क्षेत्रिचौ समुज्ज्वलज्वालाविडम्बिन्या क्षणप्रभया अगाध क्षणदायां भस्मसात्कृताविति पुरो नागन्तव्यमिदानीमिति मार्गदर्शको मां न्यवारयत् । नेदीयसी धर्मशालानन्तरा विविक्तवासिनोऽभिजातस्य महाजनस्य कस्यचन नासीदन्यत्संश्रयस्थलम् । इति विज्ञापितमपि मां दोलायमानमानसमालोक्य पुनः सोत्साहमभ्यधान्मार्गदर्शकः । 'भवत आतिथ्यपुरःसरं गृहस्वामी संभावयिष्यतीति न सन्देहः । कंचन मानुषविशेषमन्तरा सर्वेऽप्यभ्यागताः सत्क्रियन्ते सदनेऽस्मिन् ।' इति कञ्चन पूर्ववृत्तान्तं विस्मृतप्रायं विमृशन्निव समभावत मत्सहचरः । 'के ते मानवा' इत्यनुयुक्तो मया स प्रोवाच । 'परिव्राजकाः काषायवस्त्रधारिणः प्रतिषिद्धप्रवेशा इह । कुप्यते हि गृहनायकस्तेभ्य' इति स मन्दस्वरेणात्मगतं कथयन्निवागदत् । अथ गत्यन्तराभावान्मयानुमोदिते समाश्रयार्थिनावावां प्रचलितौ नचिराच्च निर्दिष्टधर्मशालां समासदौ । विचित्रोऽयं निलयः किल लघुपर्वतोपरि निर्मित आसीत् । तदन्तर्बृहत्प्रकोष्ठं पार्श्वयोश्चानेकभित्तिगतप्रतिमानस्थानं पूर्वकालीनं मठं मामस्मारयत् । प्रवेशद्वारे पलितकूर्चेन स्थविरदौवारिकेण गम्भीराकृतिना सादरं प्रवेशितौ प्राङ्गणमारोहाव गृहाभ्यन्तरमथागम् । इव उपत्यकायाः प्रफुल्लसान्द्रसस्यक्षेत्राणामतिमनोहरोऽयमालोको लोचने मे प्रमोदयचरम् । सौदामन्या क्षणक्षणायमानाया दीप्त्या शोणितवर्ण-कौशेयाच्छादितेव सा स्थली प्रत्यभासीत् । विजने वर्तमानमिदं मन्दिरं कस्यचिद् विलक्षणगार्हस्थ्याविष्कृतेः पृष्ठभूमिरिव प्रत्यभान्ते । असामान्यप्रकारो निवासोऽयं गृहस्वामिनोऽन्यथाभिरुचिमसूचयत् । परितो मन्दिरं न्यवसन्नानाविधविटपिनः सम्फुल्लकुसुमसौरभ्याढ्या विविधफलभारावनताश्च । बहिःस्थालोके रमणीयेऽपि निवास-स्यान्तर्गतनिरानन्दैरस्पार्शैर्वैषम्यात्तत्र प्रविष्टमात्रोऽहं कयापि खिन्नतयाभिभूतोऽभवम् । पीडीनासीत्स्वचिन्ताया गुरुता क्वचित्कोऽपि विडम्बनारहस्यान्वितो विमोहश्च ।

अथ तावत्समाप्तस्नानसन्ध्यादिकार्ययोः परिभुक्तसरससुलभभोजनयोर्गृहाभ्यन्तरालिन्दे समुपविष्टयोर्मन्दिरस्वाम्यतिक्रान्तनिजाभ्यासिकक्रम आवयोरन्तिकमुपस्थायान्वयुङ्क्त—कच्चिदार्यौ यथाविधि सत्कृताविति । कोणे निवेशिताया दीपिकाया मन्दप्रकाशे तदाननं दृग्गोचरं नाभूत् । मदीयमार्गदर्शकस्यापरिचितोऽयं महाभागः किञ्चिन्मया सार्धं समभाषत । ततश्च मां नमस्कृत्य निजशय्यागारमगमत् । तमिस्रायां चाहं सहचरद्वितीयो धूमपानभोगसुखमनुभवन्नवास्थिषि । अथेदानीं प्रभञ्जनस्य प्राथमिकोद्यमतायां विरतायां गुटिकास्थूलं वर्षितुमारब्ध मघवा । प्रघणस्याधःस्थं प्राङ्गणं पटलविहीनं जलौघेन समपूर्यत जानुदघ्नम् । आगामिनि दिवसे पर्यटनं दुःसाध्यमिव प्रत्यभात् । अथान्धकारावृते भवनेऽस्मिन् घटिकार्धमवस्थाय निद्रासुखमुपभोक्तुं यावत्प्रवर्तावहे तावत्कश्चन दीनदीनः शब्दः श्रुतिसरणिमावयोर्न्यपतत् तदनु सद्यो घण्टाया झणत्कारोऽश्रावि । किमेतदिति मया कुतूहलात्पृष्टः सहचरो मे प्रत्युवाच । कोऽप्याश्रयार्थीति । गृहाद्बहिः शब्दो नेदिष्ठतां प्रतिपेदे । न चिरादुद्घाट्य प्रवेशद्वारं काचन योषित्पञ्चत्रिंशद्वर्षदेशीया हस्तशकटं प्रचालयन्ती प्राङ्गणं छायाकृतिरिव प्राविशत् । शकटस्य पूर्वभागलम्बदीपिकायाः प्रकाशेनालक्ष्यत यत्तस्याः छिन्नकषायवसनं तदङ्गयष्टिलग्नमासीद् येन शरीरकृशता तस्या विशेषतो लोचनपथमगमत् । हस्तशकटे पिण्डीभूताष्टनववर्षीयस्य किशोरमात्रुपाकृतिः शयानासीत् । विलोक्य परिव्राजिकां तां मदीयः सहचरः सविस्मयमासनात्सपदि समुत्थायाधः स्थितामङ्गनां मृत्युलोकात्पुनरुत्थितामिव निरीक्षितवान् । तदेषा परिचिताऽस्येति मे स्फुटीभूतम् । प्रविष्टमात्रायाः प्राङ्गणे वृद्धप्रतिहारः शरणार्थिन्यास्तस्या असहायतामनादृत्य निष्ठुरं तामपसारयितुं प्रावर्तत । अथ सा हस्तशकटमधिशयानं बालं गोपयितुमिव क्षणं हस्तपल्लवाभ्यामाच्छादयत्ततश्च सद्यो यथागतं निर्गत्य सोत्फालमन्धकारमहोदधौ सह शकटेन न्यमज्जत् । सूचीभेद्यतमिस्रायां तमस्विन्यां निक्षिप्ताया अशरणायाः स्त्रियास्तस्या दीनदीनतामालोक्य दयाविष्टहृदयोऽहं सहचरमब्रवम् । मन्दभागायै तस्यै कियदपि धनं दातुमुत्सहे येन सा कस्याश्रये प्राप्य निशां सुखेन गमयेदिति । मत्सूचनामननुमन्वान इव मार्गदर्शको विनोत्तरं क्षणं जोषमवतस्थे । न चिरात्तु साभिनिवेशं मामभोऽनैषीत् । निःशब्दं च प्रवेशद्वारमुद्घाट्यापासर्पावावाम् । गृहाद्बहिःस्थां भित्तिमवलम्बमाना सत्रेपमुरःशरणाबला व्यलोकि । सा च नेदीयसः पुरातनचिनाराख्यतरुविटपस्याधो निरन्तरपरिश्रमक्लान्तानना कम्पमानसर्वावयवा कञ्चन दुष्प्रतीकारमाधिप्रधानं व्याधिं स्पृशन्ती भस्मलिप्ताङ्गी, शकटस्थं बालकं मधुरमधुरगिरा सान्त्वयन्ती स्थितासीत् । नानया जीर्णकषायचीवरवेष्टितविग्रहयापि बाष्पबिन्दुसन्दोहप्रवाहेण फटितकपोलया विकलिताङ्गयष्ट्या सामान्यवनीपकया भाव्यमिति निरचिनवम् । तस्याः पिङ्गलवर्णे वाताहते चानने शुद्धेन्दनाविष्कारे सद्वंशशंसिनी कापि दिव्यच्छटाऽद्योततराम् । विचिन्तितं च मया यदनया तपस्विन्या कस्मिन्नपि दुःसमाधानसंसारनाटके दुःखितापात्राभिनेत्र्या भाव्यमिति । अतो यथापूर्वनिश्चितं तस्यै धनविश्राणनं कर्तुं नापारयम् । मत्सहचरो मम दोलायमानचित्तमनुमाय सपदि परिव्राजिकां सम्बोध्याब्रवीत् । अयि

भगिनि ! कुतः शर्वर्यामीदृश्यां पर्यटितुं भवती प्रवृत्तेति। सा च सकटकटदन्तविरतायापि मूर्तिमती धीरतेव प्रत्युवाच— आत्मनोऽपदानार्थमवन्तिपुरस्थं दैवतालयं प्रति प्रस्थिताम-स्म्योदये । भवत्ये को नु व्यवसायशालिनं प्रत्ययमीक्षामिति । कुत्र यास्यति भवतीदानीमिति मदुक्तमरण्यवम् । सा च प्रत्यभाषत— विधातुरवनी विपुला खलु । अवश्यं कापि कोटिका मयोपलप्स्यते । इयोऽस्त्वान् भगवान् दामोदरो दीनाया मम दयिष्यत एव । अस्यन्तूर्मितो स्निग्धमेकं पुरातनं महच्छुन्धपर्णं पर्याप्तं गलमिमं धारयितुम् । एवं निश्चय तत्र समीपवर्तिनो वृक्षस्य कोटरे स्थास्यामि सुखम् । इत्यपूर्वधैर्येण मां समाश्वासयन्ती । पूर्वकृतो धनविश्राणनसंकल्पो मे मार्गदर्शकेन तस्यै निवेदितः, परं कृतज्ञतापूर्वं तमनङ्गीकृत्य व्याजहार सा पुनः । अयि भो महानुभावाः ! अवश्यमनुभोक्तव्यं कृतं कर्म शुभाशुभमिति पुराणवचनानुसारेण जन्मान्तरपापस्य फलमनुभूयते मयेदानीम् । अपरिचितजनस्यास्यैतन्मोहगलम्बर्धिनो भयाऽऽश्रयः, परमज्ञातजनाधाराद्यावधि स्वीकृतं धनं मन्दभागिन्या मयेति व्यक्ततरं वदने वसनप्रान्तेन प्रवृत्ताऽन्यथादेशा । तदनु वात्सल्य-पुष्पाविर्भर्वनः मन्दमन्दमाहूतिं शकट्यां मार्गे मार्गे पुरः पश्चिमार्गे शकटं प्रचालयन्ती पयोदपटलप्रावृततया गगनस्य तमःप्रच्छादितायां भूम्यां शनैः शनैः प्राचलत् । तस्या अतुलेन धैर्येण विस्मापितानावयोः तमिस्त्रायां मार्गमन्विष्यन्तीमाकृतिमविच्छिन्नाया निरूपयन्तौ क्षणं स्तब्धावावामिवाभवाव । अथ कस्मिंश्चिदन्तरे सकडकडं गर्जितं घनाः-पुन्मेनाकर्णि । अन्तरान्तरा च दुष्टजनमन्दस्मितमनुकुर्वती क्षणदृष्टनष्टालोकप्रसारा व्यद्योतत क्षणप्रभा । पूर्वतोऽपि प्रचण्डतरेण द्वितीयेन प्रभञ्जनेन सकलघटपटं जलासारैः प्लावयिष्यता मध्येन प्रत्यासन्नप्रायेण भाव्यमिति शङ्कितं मया । गृहैर्निष्कृपेणाऽन्ततो पतिशिशुभिर्हीनायां परित्यक्तां वराकीं शोचनीयदशामभिभूतां तां चिन्तयन् कम्पोद्वेगेनेवमान-हृदयः किंकर्तव्यतामूढ इव मुहूर्तं स्थितवानहम् । कथायान्तरयाचिण्या दीनदीनाया-मपराङ्गिन्या आश्रयार्थिन्या इयमिति गृहस्वामिनं प्रार्थयितुमिच्छन्तं मां मम सहचरः सविषादं व्यवालोऽभ्ययात् । परकार्येषु व्यवहारो न साम्प्रतमिति । अथ गन्तव्यगमनात् सुतरां विषण्णः सहचरेण सह प्राङ्गणोपरिस्थमलिन्दं निवृत्तः प्रभञ्जनस्थयोदैवोपहतयोर्द्वयोः परित्यक्तयोर्मूर्ती मनःचक्षुर्भ्यो निरासयितुमक्षमोऽवोचं सहचरं कीदृशीयं घटना विधेरिति । स्वकीयेन कर्मणा निहताऽस्ति सा । सन्तमसे तां विना न कोऽप्यत्र दोषास्पदं खलु । इति प्रत्यभाषत मार्गदर्शकः हृदयविहीनेन स्वरेण । परिव्राजिकायास्तनुजितुरक्षयाऽऽप्यर्थे किमर्थं भवद्भिरस्माभिर्मयाऽर्थं निश्चितास्ति मेति । भागधेयं मनुजस्यात्मन एवाधीनं खलु । इति मन्दस्वरेणोदीरितं सहाध्वगस्योत्तरं शोचनीयवार्तांशमीक्ष्युल्लेखमात्रेण मया मयोध्यम् । कश्चित्कल्पानन्तरा इतिवृत्तं विदितमिति । अथ किम् । अतिशोचनीया खलु वार्ताऽस्याः । इत्यवदत्सहचरो मे दीर्घं निःश्वस्य । तदनु [illegible] तमाश्रुताश्रु प्रज्वलय्य मार्गार्थं प्रसारितपादः परिव्राजिकाया वृत्तान्तं कथयितुमुपाक्रमत ।

"आर्यादिष्टा मा निष्ठुरवाक्पुंसो श्रीमन्तस्य श्रेष्ठिनो गृहिणीति विश्वस्येत किं भवद्भिः" इत्यनुयुक्तोऽहं क्षणं विमृश्यासनं प्रतीतोऽस्मि खलु वक्तिस्य इति ।

मत्सहायो मुहूर्तं विचारपरः स्थित्वेतस्ततो निक्षिप्य दृष्टिं नास्ति कोऽपि सन्निधौ निभृतश्रावीत्याश्वास्यास्मानं सहजस्वरेणारब्धवान् कथाख्यानम् ।

"दशभ्यो वत्सरेभ्यः पूर्वं नासीत्किमपि धरातले दुरासदमेतया । शीलोऽयं पत्नीप्रणयी पञ्चाम्बुदेशस्यामृतसरनामनि नगरे महत्तमसौधानामनेकफलवृक्षवाटिकानां निखिलभारतदेशपर्याप्तफलोत्पादिनीनां स्वामी देवतामिवैतां सममानयत् । आसंश्च बहवो विपण्योऽप्यस्मिन्नायत्ताः । प्रतिवर्षं ग्रीष्मसमये जायापती शीतानिलसुखोपभोगार्थं कश्मीरेषु भूस्वर्गायमाणेषु श्रीनगरवर्तिनि रमणीयभवने दलनाम्नः सरसस्तटे कमलदलाख्ये निजालये कतिपयमासान् कृतावासावास्ताम् ।"

"अपि केनापि दुष्टकामुकेन दम्पत्योः सुखं विध्वंसितम् ।" इति सहसानुयुक्ते मया 'एवमेव प्रत्यभात्तदानीमि'त्युक्त्वा क्षणं विरम्य पुनराख्यातुमारब्ध सहचरः ।

"मुग्धाया अतिश्रद्धालुत्वादेव विनाशस्तस्याः समजनि । निखिलवैभवद्युत्या समुद्भासितमपि सर्वभूषाभिभूषितमपि सुस्वादुफलादिवैपुल्यवदपि रजतपात्रसंभृतमपि भव्यप्रसूनसौरभ्यसुरभिप्रमदवनेन समीपवर्तिना सुरसागरायितमपि जितेन्द्रभवनमपि गृहभूषणभूतस्यापत्यस्य विरहेण शून्यमेवासीत्सदनं तयोः । दम्पत्योः परस्परप्रेमबद्धयोः कौबेरसम्पद्विडम्बिनि गेहे सन्ततेरभावात्पापच्छिद्रकुसुमरसो मक्षिकापतनात्क्षीरमिव दूषितो बभूव । नन्दनानन्दाभिलाषिण्यानया सन्नार्या धार्मिकवृत्तिसंपन्नया सह भर्त्रा नानाविधानि व्रतानि समाचरितानि भारतवर्षस्य भूयिष्ठानि पुण्यानि तीर्थानि च समासेवितानि । प्रत्यहं तथा जप्ता जपाः । अनुष्ठिता महारुद्रादियज्ञाः प्रतिवत्सरम् । प्रतिसायं पण्डितप्रकाण्डेभ्यः पावनतमानि श्रीभागवतादिपुराणानि श्रुतानि सपरिवाराभ्यां दम्पतीभ्याम् । आसेव्यन्त तथा च नानाविधभेषजानि । परं नैकोऽप्यभ्युपायः फलोन्मुखत्वमापेदे । निराशापिशाचिकया कवलितचित्तायास्तस्या जीवनं शून्यशून्यमभूत् । अथ गच्छत्सु कतिपयेषु वर्षेषु तस्या अनुत्साहः प्रतिदिनं वृद्धिं गतः । पञ्चविंशतिवर्षदेशीयाप्यात्मानं वृद्धमाकलयत् । तथा पराधीयमपि भर्तृबान्धवानां तिरस्कारभाजनमभूद्यया वन्ध्याः प्रायेण जनधिक्कारपात्रं भवन्ति । अधिक्षिप्ता च तैर्भूरि कटुशब्दैः कवलीकृता च मानमन्युव्यथाऽवसन्नप्रायाऽवतस्थे । अथ तस्मिन् समये सर्वतः पञ्चाम्बुदेशमण्डले पूजितस्य कस्यचन योगिनोऽलौकिकप्रभावजन्याद्भुतवार्तास्तदीयश्रुतिपथे न्यपतन् । नानादिग्भ्यो यात्रिकाः समाययुस्तत्सन्निधे—केचिच्चिरस्थायिव्याधिग्रस्ताः, अन्ये दुर्भाग्यपरम्पराभग्नाः, केचिदितरे जन्मनः प्रभृति चिकित्साज्ञानामपत्यानां चिकित्सार्थिनः, केचित्पुनर्मुनेर्दर्शनकुतूहलादेव । प्रादुर्जना यत्र प्रतिवर्षं हेमन्तकाले यदा श्रीमदमरनाथस्य हैमलैङ्गायतनाभिमुखाश्चाकदम्बतरा सहस्रशो यात्रिका आ हिमालयाद्या-कन्याकुमारीत आमुक्तमुक्तामाणिक्यवैडूर्यहीरकमरकतपद्मरागादिस्फुरिताभरणादिभि-र्दीनारादेशीयपरिधिपुष्कलाम्बराणां रजतहाटकमयपात्रैर्विविधविरलफलपुष्पपूरितमञ्जूषाभि-रमूल्योपहारैः सार्धमहमहमिकया समुपययुः । योगीन्द्रमेनं निरतिशयप्रभावपदारो

अथ यावत्कुटीरान्निर्गच्छन्ती मीरा प्रवेशद्वारं पिधातुं यतते तावत् कपाटस्य पृष्ठे विलीनं छत्रमेकं तापसस्य नामाङ्कितं भूमौ सहसा न्यपतत् । सपदि तदुद्धृत्याम्यधान्मीरा " अम्ब ! अम्ब ! पश्य ! हन्त तस्येदं छत्रम् । तत्स्मारकमिति रक्षिष्याम्येतत् । " इत्युक्त्वा छत्रं सादरं सबहुमानञ्चादाय बद्धमौनां प्रसूमुपेत्य मर्म तया प्राचलत्प्रदीपे । अथ कतिपयपदानि प्रचलन्तीभ्यां विजने मार्गे प्रदोपसमये दूरादेव ताभ्यामवालोकि कस्यचित्पुरुषस्याकृतिः । नचिराच्च तापसस्तयोः पुरतस्तस्थौ । समालोक्य मीरा रोमहर्षोत्कम्पमाना विलुप्तवागिव बभूव । तापसस्तु स्वमगलहस्तं पश्यन्निव भूतमनास्तस्थौ । प्रहर्षेन्दिरा साशीर्वादवचोभिर्वंशाजामातरावभिनन्द्य तयोः करौ संयोजयामास । ततश्च सगद्गदं न्यगदत् ' अहो ! अनुपम ! अमूल्यं खलु भवदीयं छत्रमिदं येनाष्टादश वर्षाणि विश्लिष्टया भार्यया पुनः संयोजिता भवन्तः सर्वं च सुखावहं पर्यवसितमिति ।



॥ श्रीगणेशाय नमः ॥

# ६. हैमसमाधिः

दिवसोऽवसितप्रायः। अस्तं गमिष्यतो भगवतः सहस्ररश्मेररुणरश्मिभिश्चुम्बितानि हिमच्छन्नान्युच्चोच्चशिखराणि हिमाचलस्य विविधधातुमयत्वाद् देदीप्यमानानि नानाविधरत्नखचितानीव विदूराद्व्यतिभान्ति स्म। नगाधिराजोऽयमवगाह्य पूर्वपश्चिमौ वारिनिधी भूमेर्मानदण्ड इव पूज्यमानस्तिष्ठतीति कवीन्द्रस्य सूक्तौ प्रेक्षकस्य दर्शं दर्शं कथं न प्रतीतो भवेत्।

अस्ति निविष्टं मणिमयगिरिमेखलायाः क्रिष्टिवाराख्यग्रामस्य च मध्ये क्वचिद्विविक्तस्थले कुटीरमेकं ग्रामीणस्य कस्यचित्। प्रदोषेऽस्मिन् काचिद्रूपयौवनसम्पन्ना हिमानाम्नी युवतिः सृष्टिसौन्दर्यमालोकयन्ती कुट्या बहिश्चिनारनाम्नस्तरुविशेषस्याऽऽलवालं परितो रचितायां वेदिकायामुपविष्टासीत्। दरीदृश्यते तस्याः पुरः कुटिलः पन्था यः शालिक्षेत्रादारभ्य कारवाहीगुल्मेष्वन्तर्हितस्ततश्च पुनः सुदूरं दृष्टिगोचरो भवति। नेदीयसः परश्शतपादायतस्य गिरेरधस्तात्सुदूरं प्रसृतः प्रचण्डो जलप्रवाहः प्रतिक्षणं प्रस्तरान् शकलीकुर्वन् फेननिकरोद्गारभासुरो निर्झरझर्झरनिनादेन दिगन्तमापूरयन्निवासीत्। आस्तामुभावपि पार्श्वौ पर्वतस्यावृतौ नानाविधपुष्पितवन्यगुल्मैर्नन्दनवनरमणीयताविडम्बिभिः। अतिमनोहरं हिमालयस्याद्भुतसौन्दर्यं दर्शं दर्शं विस्मृत्यात्मानं हिमा गाढं समाहितेव तस्थौ। सर्वतः शान्तताधिदेवता व्यराजत। समयेऽस्मिन् गगनचुम्बिशिखराः सुवोद्धपद्रुमाः पर्वतीयप्रदेशस्य दिग्रक्षका इव निश्चलाः सावधानमिव तस्थुः। गन्धवाहो निरुच्छ्वास इवास्त निःशब्दः स्तब्धश्च। अथ यावत्तरुणी दीर्घं निश्वसिति तावत्तस्या माता वृद्धनः समुपेत्य तारस्वरेण पप्रच्छ। हिमे, अयि किं चिन्तयसि वचनं सर्वथा तस्य मूढमतेस्तापसस्य श्रीनगरनिवासिनः। सहसाऽऽमनात्समुत्थापितेव हिमा परावृत्य परिणतवयस्कां कृशाङ्गीं निजजननीं कुटीरान्निर्गतामद्राक्षीत्। दत्तप्रत्युत्तरेङ्गितेन पुन[illegible]विस्तारस्य निरूपणे हिमा व्यापृता समभूत्। स्थविरा च पुनरनिच्छमुपविश्य ताम्बूलं चर्वन्ती व्याहरत्—अये, निमित्तज्ञोऽयं धर्मकञ्चुकीति निश्चिनोमि। किमनेन तस्य संदेशेन। हन्त, तस्मिन् विश्वस्या त्वया समाकृष्टास्मीयद्दूरं महारण्यम्।

हिमा —— मातः, किमिति वृथा तापसमुपालभसे।

वृद्धा —— अपि तेन मनिश्चयं ज्ञापितासि तत्र पत्युरम्बुजस्य संकेतस्थानमुद्दिश्य। अम्बुजस्य वृत्तोपलब्ध्यै गतवत्यहं सह त्वया तत्सन्निधे, न पुनस्तद्विचित्रमुखावलोकनाय। आः, धवङ्ग एवासौ।

इति सतिरस्कारमुक्त्वा सा नासिकया नस्यचूर्णमाददे।

हिमा —— मातः, सत्यमेव तेन यत्...

इत्यर्धोक्तवचना व्यरमत तरुणी।

वृद्धा—किं नाम व्याहृतं तेन। पुण्यम्—पुण्यमेव सिद्धिप्रदम्। (सोपहासं विडम्बयन्ती) यथा यथाधिकं कष्टं पुण्यवृद्धिस्तथा तथा। नैतदम्बुजस्योदन्तस्य कमप्यंशं व्यनक्ति।

हिमा—तथापि तापसस्य संदेशेऽस्मिन् कोऽप्याशाङ्कुरो व्यज्यते खलु।—

इति सा शुम्भितनिष्प्रभधूम्राम्बरतलान् देवदारुद्रुमान् जोषं विलोकयन्ती समुदैरयत्।

वृद्धा—वत्से, का नामाशा ? श्रीमदमरनाथस्य हिममन्दिरं प्रति प्रयागं संगमयिष्यति त्वामम्बुजेन ? व्यतीतं खलु वर्षपञ्चकं तस्य प्रयातस्य गृहात्। पिताऽपि तस्य त्रिंशे वर्षे परिभ्रमणसक्तो भार्यां मासजातापत्यं च विसृज्यामरनाथयात्रावद्धादरो गेहान्निर्गतो न पुनर्निवृत्त इति श्रुतमस्माभिः। गेहिनी तस्यानवरतनयनाम्बुधारा वर्षन्ती शोकानलेन प्लुष्टेव स्वशिशुं माहितानुजनामकं तदानीमेकान्ददेशीयं करमेचिन सुहृदे समर्प्य दिवं गतवतीत्यपि सुविदितमेव नौ।

हिमा—परं पर्यटनासक्तिः पित्रा प्रेरिता तस्मिन्निति तन्पूज्यतातपादेषु दोषमारोपयितुं नोचितम्। अपरं च विदितमेव ते यच्चिरात्तिरोहितस्य पितुरन्वेषणैकधिया प्रस्थितो हिमाचलं प्रति तव जामाता, न तु विहारसुखोपभोगाय न वा पर्यटनासक्त्या।

वृद्धा—प्रवृत्तिरीदृशी वंशपरम्परागतास्तीति न संदेहः। हिमे, सुप्राहितनाम्नी त्वमपि हिमगिरिमारोढुमिच्छसि नष्टस्य पत्युरन्वेषणायेति न विस्मये।

हिमा—अम्ब, किमित्येवं ब्रवीषि। वेत्सि त्वं यदस्य पुनर्दर्शनस्य नास्ति स्तोकमप्याशा। आध्युपशमनार्थमेव यात्रेयं मयि जिगमिषां जनयति। व्यतीतेषु पञ्चसु वत्सरेषु प्रतिक्षणं विरहजन्यमसह्यदुःखं सोढवत्यहम्, इदानीं [illegible] गलितधैर्या संजातास्मि। मानसव्याधिमुपशमयितुमनेक उपायाः कृता अस्माभिः, परं सर्वेऽपि निष्फलत्वमेव याताः। तस्मादेव श्रीनगरे तापसस्योपदेशोऽभ्यर्थितो मया।

इत्यभिधाय श्वासस्थैर्यार्थं मुहूर्तं विरम्य पुनरुपाक्रमत वक्तुम्—

हिमा—अम्ब, पर्यटनमिदं प्रशान्तिं मे प्रदास्यतीति नास्ति संदेहलेशोऽपि।

वृद्धा—परं पुण्यस्य कः सम्बन्धोऽत्र।

यथा यथाधिकायासः पुण्यवृद्धिस्तथा तथा।
पुण्यं हि सात्त्विकं नूनमशक्यमपि साधयेत्॥

इति भविष्यवादिनं तापसं विडम्बयन्ती मुखविकृत्या क्रियासमभिहारं तद्वचनं प्राजल्पत् स्थविरा।

हिमा—मातः, जानासि यच्चास्ति पुण्यादन्यत्किमपि महत्तरम्। ध्यानतपोव्रतादिक्लेशोत्तरमधिगतात्पुण्यान्माहात्म्यमेवोद्भविष्यति। अपरं च वर्षपञ्चकात् प्राक् श्रीमदमरनाथक्षेत्रादेवाम्बुजस्य प्रथमं पत्रं समासादितं मया।

वृद्धा — कश्चित्कालमुषित्वा च तत्रास्मिञ्जन्मनि समं वल्लभेन संयोक्ष्यसे पुनरिति तव विश्वास उपहासास्पदं खलु।

हिमा — को जानीते।

वृद्धा — वत्से, वृद्धाया मे वचः शृणु तावत्। अतिशैत्यादार्तां न यावच्छिलायिते भवावस्तावदेव श्रीनगरं निवर्तावहै।

हिमा — (सविस्मयम्) किम्? इयद् दूरमागत्य निवर्तिष्यावहे?

वृद्धा — (अत्यन्तोपस्वरेण) हन्त, मार्गक्लेशबाहुल्यस्य नाल्पिष्ठमपि व्यतर्कि मया प्रयाणात्पूर्वम्। उपत्यकाया अथ शीर्णवल्कजातभारवाहकस्योरणस्य पतनादारभ्य शङ्कया-ऽऽकुलीभूतास्मि। को जानीते कीदृशी घटना घटेत पथीति। अपरं समयेऽस्मिन् विशेषतः श्रावणमासे यात्रिकाः परस्सहस्राः पुण्यक्षेत्रं समागता विकरिष्यन्ति सर्वत्र मालिन्यं व्याधिं निर्भरं च। एतद्देशीयवायुजलादिकमपि नानुकूलं तवेति प्रत्यहं कृशिमानमापद्यसे विवर्णा च संजातासि। अतः स्वदेशं प्रतिनिवर्तावहै शीघ्रम्।

हिमा — मातः, प्रोक्तमेव मयाऽसकृन्न कोऽपि जगतीतले मत्प्रतिज्ञां मिथ्या कर्तुं प्रभविष्यतीति। तस्मादलं निषेधवचोभिः।

वृद्धा — (किञ्चित्कुपिता) मूढासि त्वं यत्पराधीनेऽपि विषये एवंविधा प्रतिज्ञा कृता त्वया। अतो गम्यतामेकाकिन्यैव। निवर्तिष्येऽहमितः श्रीनगरम्। नाहं व्याहन्मि तवोत्साहम्। (मुहूर्तं विरम्य) परिभ्रमणावेशप्रवृत्तिं पैतृकधनमिवाप्तवाननुजः, परं कस्मात्त्वयाधिगतेयमिति न जाने।

अथ मातृवचनमाकर्ण्य किञ्चित् स्मितानना अभग्नोत्साहा तरुणी तूष्णीकं वितस्थे। अथ परेद्युः भानूदयात्प्रागेव विसृज्य शय्यां विना जननीं प्रस्थातुं प्रावर्तत हिमा। ह्रस्वकायस्त्रिविष्टपदेशीयः कश्चित्तस्याः पोट्टलिकां वहन् स्कन्धेन तत्पृष्ठतोऽचलत्। प्रस्थानसमये मातरमियं यदाह्वयत्तदा तस्यै प्रदायाशीर्वादं वृद्धा तूष्णीं तस्थौ। परस्तात्कुटीरस्य द्वारदेहल्याः प्रयान्तीं कन्यामादृष्टिपथगतां प्रेक्षमाणा स्थितवती।

अथ हिमानेकाहानि चिनारदेवदारुभूर्जादिद्रुमव्याप्ते महारण्ये पर्यट्य यावदेकदाऽपराह्णे चेनावनामकं रज्जुनिर्मितसेतुं समासदत्। समागत्यात्र कस्यचिच्चिनाराख्यतरु-विशेषस्य प्रच्छायशीतले तले निजं शयनीयं विस्तृय कञ्चित्कालं विश्रान्तिसुखमासेवत। पराह्णस्य मान्थर्येण व्याप्तं गन्धवाहं निर्मलं परिमलमयं च श्वसन्त्यै सपदि तस्यै निद्रादेव्या सुष्वापसुखमदीयत। घटिकोत्तरं प्रबुद्धा शय्यां निबध्य पुरः प्रयातुं यदा सा प्रवर्तते तदा मार्गदर्शकस्तस्यै चिरक्षुण्णवर्त्माऽङ्गुल्या निर्दिश्याब्रवीत्—अनया पदव्या गन्तुमर्हति श्रीमतीति। परं श्रीनगरनिवासिनस्तापसस्य संदेशो यथा यथाधिकायासः पुण्यवृद्धिस्तथा तथेति तस्याः श्रुतिपुटौ पूरयन्नासीत्। तद्वचने बद्धविश्वासा च सा शिरः कम्पयित्वेङ्गितेनैव मार्गदर्शकस्य सूचनां निराकरोत्। सङ्कटापन्नेन पथा जिगमिषोस्तस्या निश्चयं विदित्वा साश्चर्यं तस्यां बद्धदृष्टिः क्षणं निरुत्तरः स्थित्वा त्रिविष्टपदेशीयः प्रत्युवाच

—भगवति, पुरो गन्तुमक्षमोऽस्मि, पादव्यथा मां पीडयतीति। 'यथेच्छं विधेहि' इति तं प्रोच्य युवतिः पोट्टलिकामंसे समारोप्य रज्जुनिर्मितसेतुमतिक्रमितुमुपाक्रमत। ततश्च पर्वतश्रेणीतः पर्वतश्रेणीम्, अटवीतोऽटवीम्, शिखराच्छिखराग्रम्, अधित्यकातोऽधित्यकां समुल्लङ्घ्य पुरतो दरीमेकामत्यगाधामधस्तनीमालोक्य तस्या मस्तके कोऽपि झङ्कारवः समुदित इवाभात्। एकमात्रे पदस्खलितमस्मादान्दोलयद्रज्जुसेतोर्नौ प्रचण्डप्रवाहसिन्ध्या अस्मिन् प्रसभं पातयेदिति विभावयन्ती सा स्विन्नगात्री सवेपथुः समजनि। ततश्च परमात्मनः परमकरुणामेवावलम्बनं प्रतिपद्य परेशस्यागाधमहिमानं च ध्यायं ध्यायमगणिताव्यक्तक्लेशाद्यन्यस्तत्त्वभयादीन् विगणय्य कुटिलवर्त्मनैव निर्भयं सनिश्चयं प्राचलत् प्रगल्भेयं तरुणी। देवदारुद्रुमैर्गाढमाच्छादिते महारण्येऽस्मिन्नत्पादविन्यासशब्दमन्तरेण न कोऽपि ध्वनिरश्रावि। प्रदेशोऽयमत्यन्तभयावह इति यात्रिकैर्वर्जितप्रायोऽभूत्। क्वचिल्लोमशस्तरक्षुर्मार्गमवरुध्य तां न्यरूपयत्, ततश्च भयोद्विग्न इवात्मनोऽभिरिरक्षिषया द्रुतं पलायितः। अभ्रंकषपराशरनामकानां पारसीकदेशोद्भवतरुविशेषाणां मोगलसाम्राज्यकालादारभ्य सर्वत्र कश्मीरेष्वारोपितानां श्रेणिः, निबिडतमच्छायायां पिशाचपङ्क्तिरिव घोरहास्यं कुर्वाणेव व्यभासीत्। हिमा तु निर्भयमूर्ध्वोर्ध्वमारोहत्। पृष्ठतस्तस्याः पुरतश्च तत्पुरस्तोयश्रेणयोऽत्यन्तविशालहिमाद्रेर्निम्नस्थानाम्। क्वचित् द्विरेफस्य झङ्कारवे तस्याः श्रुतिसरणिं निपत्य पुनर्विरते प्रशान्तता प्रासरत्।

पर्यन्ते श्रीमदमरनाथगुहाया बहिःस्थाधित्यका दृष्टिगोचराऽभूत्। ततो यावत् पिशुनाम्नः शैलस्योत्सङ्गे स्वपमानशेषनागाख्यसरोवरमवलोकयन्त्यधित्यकां समुपैति सा, तावद् भूर्जवृक्षोऽद्रुमस्याधो ध्यायन्तं कञ्चित्तापसवृद्धं व्यलोकयद्धिमा। प्रदोषवर्धमानान्धकारे निष्प्रभनीललोहितपर्वतच्छायामिषर्णाभूले स प्रकृत्या जीर्णपर्णमिव वलितपीतवर्णोऽस्य भानाभिविलम्बमानसितसान्द्रकूर्चो भस्मधूलीधूसरितजटाजूटकोऽतिशिथिलाकुञ्चितगात्रो दाक्षिण्याङ्कितललाटो भद्रतयैव स्नातशरीरो भूतभव्यस्यापि विशालदृष्टिः शताधिकवर्षदेशीयः पुरातनकालर्षीक इव समुदलसत्। हिमायाः पदन्यासशब्दमारुण्यायितघोषमानं नयनयुग्ममुन्मील्यात्मयुक्त्या तां 'वत्से कुतः प्रतिपन्नं त्वयेदमतिक्लेशकरं प्रयाणम्' इत्यनुयुक्तया युवत्या तस्य तेजस्विमुखमण्डलं निपुणं निरीक्षमाणया श्रीनगरकृतावासस्य तापसस्य संकेतो निवेदितस्तस्मै। योगीन्द्रोऽभिनन्द्य धर्मकल्पं तस्यै मेवदुग्धफलाद्युपहारं व्यतरत्। ततश्चेङ्गितेन समीपवर्तिनीं निम्नपटलां निजकुटीं तस्यै स निर्दिष्टवान्। सखेदं दोलायमानमानसामेतां साग्रहं मनाक्देवं बभाषे—वत्से, प्रविश्यतां कुटीरमिदं निर्भयमास्यतां च विश्रान्तिसुखं सेव्यतामिति। तत्कारुण्येन प्रमुदितहृदया तरुणी प्राविशत् कुटीम्, विसृज्य चास्तरणं भूमौ सपदि गाढनिद्रया गृहीताभूदानिशीथम्। ततश्च गवाक्षान्तर्निविष्टसुधाकरकरसुस्मितानना जागरितेयं शय्यां विसृज्य कुटीराद्बहिः स्थित्वा कौमुदीदुग्धप्रवाहप्लावितं गगनमालोकयन्ती विधातुः सृष्टिचमत्कारेण परवशीभूतासीत्। कुट्याः स्वामी योगीन्द्रः पूर्ववद्विनारपादपस्याधो भगवद्ध्यानेन मनसा विस्मृतदेह इव

चन्द्रालोकसौन्दर्यं कदाप्यनवलोकयन्निव विगतचेतन इव निमीलितलोचनः समवस्थितः। तस्य समाधिविच्छेदो मा भूदिति मन्दंमन्दं कानिचित्पदानि गत्वा कस्यचिद्विशालवृक्षस्याधःशिलायामुपविश्येयं कतिपयघटिका यापयामास। बृहत्तमप्रत्यन्तपर्वतानां हिममयशृङ्गाणि कश्मीरजवर्णकान्त्या हिमांशो रजतरश्मिभिश्च देदीप्यमानानि शुशुभिरे। मरकतनीलेऽस्मिञ् शेषनागसरोवरे रजन्या ध्यानपरा वृत्तिः प्रतिबिम्बिताऽऽसीत्। आलोकस्यास्याद्भुतरमणीयत्वपराधीनायास्तस्या विचारसरण्यां समापतत् स्मरणं चिरातीतानां वर्षाणाम्, स्वभर्तृसनाथीकृतस्वगेहस्य, आत्मीयस्वल्पकालस्थायिवैवाहिकजीवनयात्रायाः, अब्दपञ्चकतः पूर्वं संवृत्तस्याम्बुजस्य प्रस्थानस्य मन्दिरात्। ततश्च जन्मान्तरानुभवास्वेवाभासमयतामापद्यमानेव तस्याः स्मृतिर्मुहूर्ते ग्लानिमभजत। अपारविलक्षणचिन्तार्णवोर्मिलोडितमभून्मनस्तस्याः। व्यचिन्तयच्च—यदि तस्यां प्रचण्डस्त्रोतस्यम्बुजः सरभसं चिरात्प्रलीनः स्यात्ततः किम्? इत्याकलयन्त्याः पक्ष्मपङ्क्तियुगलं बाष्पोद्गारेण सिक्तमिव, शरीरं च रोमाञ्चकण्टकितमिवाभूत्। करुणासागरकल्लोलैराकृष्टाया मनस्तस्या विषादगण्डशैले न्यस्यत। अकल्पयच्चाकाण्डं सा यच्छ्रीनगरनिवासिनो भविष्यज्जस्याकृतिः स्वच्छपथे निपत्य क्षणादेवशतद्रुमाणां पृष्ठतः समुत्प्लुत्य झटिति पाण्डुवर्णविभावर्याश्छायायां क्षणं दृश्यमाना पलाशिनां मण्डलेषु विलीनेति। दूरस्थाधित्यकातस्तस्य स्वरप्रतिध्वनिरश्रावीति च सा व्यभावयत्। भावनेयं तु क्षणिकस्वप्न इव विनष्टाऽभूत्पुनश्च गाढनिःशब्दता शर्वर्याः सर्वतः प्रासरत्। शीतशीतोषःकाले योगीन्द्रं पूर्वेद्युरिव ध्यानावस्थितमद्राक्षीत् सा। संध्यायामस्यान्तरायो मा भूदिति यावत्सा पुरश्चलितुं प्रवर्तते तावन्मुनेर्नयनयुगमुन्मीलितं वलिनानने चास्य किञ्चिन्मन्दस्मितमाविरभूत्। कृतशतामरपुरस्सरमापृच्छमानां युवतिं मुनीन्द्रोऽभाषिष्ट—वत्से, याहि पुरः। शश्वत्स्थास्यति तव पुण्यम्। भूयाच्छिवं ते। आशीर्वचो वितरन्तु ते देवाः। इत्युदीर्य भानूदयं प्रति समुन्नमिते तस्य क्षीणक्षीणानने पूर्णशान्तता व्यराजत। न चिरात्पिहितलोचनस्य तस्य मुखमण्डलं समीक्षमाणा सादरं करपङ्कजौ संपुटीकृत्य शीतमरुन्मुखमनुभवन्ती हिमा सोत्साहं पुरः प्राचलत्।

अथ द्वित्रदिवसोत्तरं मार्तण्डमण्डले निम्लोचति समासदद्युवतिरभीष्टस्थलम्। अपर्याप्तादानतया पाण्डुवदना कम्पमानाङ्गयष्टिः श्रमेण मृतप्राया च तुङ्गतुङ्गतुहिनसञ्चितशृङ्गं तुहिनगिरेः शनैः शनैरसृपत्। प्रकाशे दिनमणेर्हरिन्मणिमालानामिव देदीप्यमानानां दिगम्बराखानामत्युज्ज्वलतेजसा दृष्टिस्तस्याः प्रत्यहन्यत। पर्यन्ते नानाविधविलक्षणभावनामग्निमग्नाऽऽप्रत्यूषाविश्रान्ता श्रीमदमरनाथस्य गुहान्तिकं संप्राप। आसीद्विशालस्थल्यां कन्दराद्बहिर्यात्रिकजनानां गणैः—क्वचिच्छ्रद्धाः परिणतवयस्काः कुब्जिताङ्गयष्टयः, क्वचित्परस्परदृष्टानां ब्राह्मणानां समूह इतस्ततो यात्रिकेभ्यो धनाशया साहाय्यं चिकीर्षुः; क्वचित्परश्शतानामन्यपाङ्गुमूकवधिरादिभिक्षुकाणां गणो जीर्णचीवरवेष्टिताङ्गः कम्पमानः, क्वचित्परश्शतानां परदेशीयानां समुदायो निवर्तमानः श्रीनगरम्, क्वचिदर्थनम्राः शिरसः स्वस्वमातृनिरम्बराः। हिमा च यातायातसंकुलजनतामहार्णवाभ्यन्तरे संघर्षिता निपीडिताङ्गी

च सर्वेषां पार्श्वतः कथं कथमप्यचलत्, यावत्सा अपि पवित्रगुहाम्। प्रविश्य च तत्राद्राक्षीद् दूरवर्तिनि कोणे गोलाधोकृतींस्तुषारराशीन्। मध्यभागे च गुहाया व्यराजत शशाङ्कमौलेस्तीर्थम्। अदृश्यत देवतायाः पुरो विशालहिममयशिलामधि भगवद्गतान्तरङ्गः साष्टाङ्गपातं नतो भक्तानां समूहः। केचिदन्येऽप्यन्यामिनिविष्टाः सोत्कण्ठं गायन्तो दिव्यं स्तवम्। परमानन्दैकपारायणं तं जनकदम्बं दर्शं दर्शं हिमा पुलकिताङ्गी व्यतिष्ठत विस्मयातिशयाकुला। न चिरादुपासनां विधाय यात्रिकाः सोत्कर्षमावक्षोभ्याहिता उच्चोच्चैरगायन् सामवेदपदक्रमोपनिषद्गतानि दिव्यपदानि। बधिरीकृताखिलादमयास्यन्तं तत्क्षणं युगपत्प्रायोऽनेकरन्ध्रेभ्यो निर्गत्य कपोतवृन्दं समुड्डीय बहिःकन्दरात्। द्विजावलोकनात्प्रहृष्टान्तरात्मा यात्रिका द्विजराजश्च ससंभ्रमं बहिर्निर्गत्याघोषयन्—प्रसन्नोऽस्ति भगवानमरनाथ इति। अखण्डपुण्यसम्पादनप्रमाथमाणी जनसंमर्दः शनैः शनैर्विलोपोऽभूत्। तेषु केचित्तपोधना अतिक्लेशमयवर्त्मनाऽवारुह्यन्ये च श्लोकाः सुगमेन पथा प्राचलन् यहुयश्च पूतवधिरायिता अवस्थिताः। वेपमाना हिमा भगवतो मूर्तेरन्तिकमुपेत्य निपातितजानु चोपविश्य शिलायां बद्धाञ्जलिः सप्रश्रयं सौत्सुक्यं सोत्कण्ठाभिलापमपि प्रार्थयत। ज्वलद्धूपनीराजनालं म्लानगात्रीं तां पुनरुज्जीवयदिव। न चिरात् सा पश्यन्तेन स्वयाप्यनयने प्रमृज्य यावत्समुत्तिष्ठति तावद्दृष्टवः सा चकितचकितेव प्राचलत्। तस्यौ हि तत्राग्र भद्रनिष्ठं तां सकौतुकं निरीक्षमाणः प्रथमा योगीन्द्रो येन स्वकुटीरे अतिथयविनेभ्यः पूर्वं प्रदत्ताश्रयासीत् सा। कथमसौ समायात इहेति नितरां विस्मितां मन्द्रयाचं तां प्रसन्नवदनवदनप्रदर्शितसिद्धान्तप्रोत्साहो मुनीन्द्रोऽभाषिष्ट—वत्से, अवलोकितासि मयाऽयान्ती गुह्यकरेणाध्वना विगाह्य सर्वमसह्यक्लेशजातम्। धन्या त्वं धर्मनिष्ठा। हन्त, धन्यस्ते भक्तः प्रभावः। भगवानमरनाथस्त्वामीष्टं सफलीकुर्यात्। भूयात्तव पुण्यानुरूपा सन्ततिः। इति समर्पिताशीर्वचनेयं निरस्तक्रन्दनाऽऽमानं कथमपि संयम्याधोमुखी तस्थौ। भूयास्ते पुण्यसंचयस्वरूपाणां शिशवोऽपीति योगिनो मृदुलमुदीरितं वचः समाकर्ण्य युवतिः अनिवार्यं विधूय शिरो हस्तौ निपीडयन्ती निरुत्तरा वितस्थे।

योगीन्द्रः—बाले, कोऽस्ति ते विषादः। किमर्थं रोदिषि। कथय सर्वं वृत्तं सविस्तरम्।

त्वनेककुहरेष्वेकं प्रति प्राचलत् । सा च जोषं तमन्वसरत् । क्षणोत्तरं प्रविश्य तत्र शवपीठिकाकारां बृहत्तमामेकां हिमशिलां समुपेतवन्तावुभौ । ततस्तुषारराशिमङ्गुल्या निर्दिश्य प्राह प्रवया:—वत्से, पश्य पश्येममिति । अथ च सा विलोक्य सद्यो विस्फारित-लोचना स्थगितेव क्षणं जडीभूतेव तस्थौ । ततश्च व्यलपत्—अहह मम दयित ! मम दयित ! ! इति । अवसन्नगात्री मुक्तकण्ठमरोदीद् विलोक्य हि हिमशिलयोरभ्यन्तरे निवेशितं कस्यचित्तरुणस्य पञ्चविंशतिवर्षीयस्य कलेवरम् । पञ्चभ्योऽब्देभ्यः पूर्वं गृहात् प्रस्थितोऽम्बुजो यथालोक्यत तथैव किञ्चित्स्मेराननः प्रेतोऽपि ददृशे । झटिति सा ललाटमण्डनायमानं सौभाग्याङ्कं कुङ्कुमं कमलोदरसोदरकरेण प्रमृज्य ग्रीवायाश्च मङ्गलसूत्र-मालामपनीय पारदर्शकहिमशिलां च सूक्ष्मं निरूप्य प्रेतस्य हैमाच्छादनपटोपरि तां न्यधात् । अहह हृदयेश्वर ! हृदयेश्वर ! ! इति परिदेवमाना शोकपारावारकल्लोल-निक्षिप्तेव सा भूमौ न्यपतत् । साक्षान्निराशाया मूर्तिरिव विह्वलविवर्णानना हिमवत्पाण्डु-वर्णा समभवत्सा । क्षणाच्च तद्बाहुपल्लवौ निर्जीवोपाङ्गमिवालम्बेतां निःसत्त्वौ । वत्से ! वत्से ! ! प्राणिनां जीवनं जलबुद्बुदस्य भंगुरत्वमनुकरोति । अलं चिन्तया मृतस्य । भगवतो ध्यानं कुरु निर्वाणं चान्विष्य । इति सहस्ताक्षेपं सर्वं प्रापञ्चिकचिन्तानिकरं विस्मृतिसिन्धौ निरस्यन्निव पलितशिरा योगिवरो युवतिं सान्त्वयामास । ततश्च समार्दवं सकरुणं क्रन्दन्तीमबलां बालां समुत्थापयामास । सा च कृतनिश्चयेव किञ्चिन्निर्णयावसर-देहल्यामात्मानमाकलयन्तीव मुहूर्तं जोषं वितस्थे । क्रमेण तदीयानने शान्तित्यागादिभावाः प्रादुरभवन् । ततश्च जानुभ्यामवनीं गत्वा बद्धाञ्जलिः सप्रश्रयं साऽभाणीत्—तात, अहमप्यत्रैव स्थित्वा गिरिजाशंकराभ्यां देहं समर्प्य अपध्यानतपोभिर्जीवनयात्रां यापयि-ष्यामि । इति वैराग्यशंसिना स्वरेण कर्णे जल्पित्वा बाष्परहिता जडीभूतेव नतमुखी तस्थौ । तपोनिधिस्तावदिङ्गितेनैवानुमतिं दत्त्वा तां कुहरस्य प्रवेशद्वारं प्रत्यनैषीत् ।

अथ यावच्छीतशीतलहैमसमाधिकुहरादुभौ निरगच्छतस्तावद्द्वारे तौ श्यामश्मश्रुकं चर्मकञ्चुकधारिणं घनलोमशशिरस्कं दीर्घदुष्करपर्यटनश्रान्तं धूलीरूषिताननं च त्रिंशद्वर्ष-देशीयं पान्थमेकं समायान्तम् । अथ मिथोऽवलोकितमात्रौ तरुणीतरुणौ क्षणं सम्भ्रान्तौ स्थितौ । पथिकः सहसा पृष्ठप्रक्षिप्तस्ततः क्षणमात्रं साशङ्कमान्दोल्यमानचित्तः समाह्वयद्युवतिं हिमे ! हिमे ! ! इति । इत्थं सम्बोधिताऽध्वगस्यानने दृष्टिं स्थिरयन्ती स्थगितेव स्वचक्षुषोरविश्वसतीव च हिमा तस्थौ मूकेव । स च स्वजीर्णपोटलिकां भुवि निक्षिप्य सरोमाञ्चं सविस्मयमत्यासपरमप्रमोदसन्दोहो झटिति सोत्कम्पं हिमायाः पार्श्वमासाद्य तां सरभसमुद्धृत्य गाढमाश्लिष्यत् । अवगन्तुमक्षमा विलक्षणमिमं व्यतिकरं युवतिर्भ्रान्तभ्रान्ताभूत् । स च तामुदासीनामवस्थितां क्रियासमभिहारेण सम्बोधयन्नाह—प्रेयसि, अयि नाभिज्ञातस्त्वयाहमनुजस्तव भर्ता । इति तेनानुयुक्ता सा शून्यदृष्ट्या क्षणं तं सूक्ष्मं निरैक्षत । ततश्च शिरसा संज्ञां दत्त्वा तस्मै, परावृत्य च समाधिकुहरं पुनः प्राविशत् । पान्थश्च योगीन्द्रद्वितीयः सकुतूहलं तामन्वगमत् । उपेतशवपीठिका सा क्षणं जोषं स्थित्वा प्रश्नपूर्वकमिङ्गितेनैव पथिकाय हिमशिलामधि-

शयानं तरुणस्य समाधिं निरदिशत् । स च प्रेतमालोक्य विस्फारितनेत्रः क्षणं निरूप्य विस्वरमाक्रन्दत्—अहो, इमे मे तातपादाः । प्रेयसि, व्यतीतानि पञ्च वर्षाणि पितुरन्वेषणैकपरायणस्य परिभ्रमतो मे । सर्वेऽपि प्रयत्ना मोघीभूताः । परं हन्त, त्वयाद्य तत्कार्यं सफलत्वं नीतमिति धन्यासि खलु । अहो, दैवघटनाया विचित्रता । इत्युदीर्य स निपातितजानुः शिलायामुपविश्य करौ संपुटीकृत्य साष्टाङ्गं पतितः । ततश्च मुहूर्तं विललास प्रकामं शान्तिः । हिमा योगीन्द्रश्च नतविग्रहं पथिकं सविस्मयमवैक्षेताम् । अथ समुत्थिते तस्मिन् मुनिरङ्गुल्या हिमशिलानिवेशितं प्रेतं निर्दिश्य व्याचख्यौ—अहो विधातुः सृष्टेरयमेकतमोऽद्भुतश्चमत्कारः । त्रिंशतमब्दान् हि सततमस्यास्य हिमशय्यायामस्यां कृतपदस्य निरन्तरप्रस्वापसुखमनुभवत इव कालहस्तेनास्पृष्टं कलेवरं स्थितम् । इत्युक्त्वा हिमशिलोपरि निहितां मङ्गलसूत्रस्रजमादाय पुनरब्रवीदम्बुजम् । बधानैतां मालिकां ग्रीवायां ते प्रेयस्याः । त्वदन्वेषणपरया साध्व्यानया पुरुषेणापि दुर्गम्येन वर्त्मना पादचारिण्या श्रीमदमरनाथकन्दरारोहणं साधितमिति श्लाघ्यामिवर्धत एषा । समागमोऽयं युवयोरस्यास्तपसां परिणामः । इत्युदीर्य हिमाम्बुजौ प्रमोदपारावारप्रवाहपूरप्लावितौ विसृज्य कुहरान्निर्ययौ योगीन्द्रः ।



॥ श्रीगणेशाय नमः ॥

# ७. मायाजालम्

अस्ति किल कस्मिंश्चिद्रमणीयोत्तुङ्गशैलशिखरे लोकलोचनानन्दप्रदं गुर्जरावनिमण्डले विराजमानमाबुनाम पर्वतावृतं ग्रीष्मविहारस्थानम्। व्यराजत तत्र गोवर्धनोद्धारिणो दारुणदानवविदारिणो भगवतः सृष्टिसुन्दरीचूडायमानातिसुन्दरशिखरमण्डनं मन्दिरम्। परितो देवागारं व्यलसन् नानाविधा विटपिनः सुगन्धपुष्पाढ्याः। सुरालयस्यैकस्मिन् विविक्तकोणे बधिरमूकः कश्चिद् दैवज्ञो नित्यमुपाविशत्। विलक्षणान्तर्बोधसंपन्नस्यास्य सविधे नानादिग्भ्यो बालस्त्रीपुरुषाणां समूहाः स्वस्वदैवगतिजिज्ञासया समाययुः। नैसर्गिके वैकल्ये सत्यपि मूकाभिनयेनैवात्मेङ्गितं जनाय बोधयामास ज्यौतिषिकोऽसौ विचक्षणः।

स सत्यगवेषी ध्यानजपादिसाधनैर्भगवन्तमाराधयन् स्वाश्रितजनैरुपास्यत। अथैकदात्र चतस्रः प्रमदाः काश्चन गवेष्यमाणस्यात्मनः प्रियजनस्य नामधेयं प्रसूनैश्चित्रयितुं दैवज्ञेन मूकबधिरेणादिष्टाः। अतो देवमन्दिरस्याङ्गणमनवरतनिपतद्बकुलकुसुममकरन्द-सुरभीकृतमध्यारुह्य लेखार्थं स्वस्वदयितनाम्नः पर्याप्तानि प्रसूनानि संचित्य प्रदोषस्य सुवासितपवनमासेवमाना विटपिनामभ्यन्तरे शब्दायमानं मरुत्सूत्कारं शृण्वत्यो विश्रान्ति-सुखमुपाभुञ्जत। देवतायनात् पुरोहितानामादौ स्तोत्रगायनं ततश्च घण्टातालभेरी-मृदङ्गवीणादीनामाकर्णितो मन्द्रतारोऽपि श्रोत्रहरो निनादः।

अथाङ्गनासु चतसृषु संजातपरस्परालापास्वेकतमा ज्येष्ठा दयानाम्नी निजगाद—एकैकस्यास्मासु यथाक्रममात्मीयकथा निवेद्यतामिति। तासु कनिष्ठा मुग्धानाम्न्यभ्यधात्—भवतु, रम्यतमायां राकाशर्वर्यामस्यां परस्परवार्ताश्रवणेन प्रायोऽस्मदीयव्यथा शिथिलीभवेत् सर्वासामस्माकं किञ्चित्परिसान्त्वनमपि भवितेति। तत्प्रारभ्यतां कनिष्ठया भवत्या स्वकथेत्यन्याभिर्युगपदभ्यर्थिता मुग्धा स्वचरिताख्यानमुपाक्रमत।

मुग्धा — गुर्जरदेशे पश्चिमपयोनिधेस्तटवर्तिनि डुमसनामनि ग्रामे मम पितृपादा न्यवसन्। ते च यथासंप्रदायं वंशपरम्परया प्रतीता अभूवन् यदुद्वाह एव प्रयोजनं प्रमदाया जीवनस्येति। पठनलेखनाभ्यामन्तरेण शिक्षणं स्त्रीणां नावश्यकमिति तैरेवं प्रत्यपद्यत। अतोऽनाप्तान्तर्दशवर्षाया एव मे कुमारं कञ्चिदनाथाश्रमादवृण्वंस्तातचरणा मत्पाणिग्रहणोद्देशात् षोडशवर्षदेशीयेनानेन सार्धं युवकेन यथाविधि विवाहवाङ्निश्चयं व्यधुश्च। दिवं गतायां मे मातरि कश्चित्कविकुमारकोऽयमस्मदुपवने निभृतं मामभिलषत्। अस्मद्वनमभितस्तदाभूत्सुधारं रमणीयं तथा च व्यलसच्छिवजयौन्दर्येण निर्जितनन्दनवनं यथा तापसस्य ऋषेश्चात्रागतस्यापि चित्तमभिनन्दयेत्। उद्यानेऽस्मिन् नानाविधाः शाखिनः कदलीनारिकेलाम्रदाडिमीनारङ्गजम्बीरपनसादयो व्यराजन्त। पुरातनवटपादपानामधो विश्रान्तिसुखोपभोगार्थं वेद्यः बद्धिता आसन्। सर्वतः कुसुमलताः समुल्लसिता अनुपममामोदं प्रासारयंश्च।

अथैकदा सायमावामुपवनेऽस्मिन् पिककूजननादिते निभृतं परस्परसमागमामन्दानन्दसुखमुपभोक्तुं मिलितावास्व । धवलयति वसुधातलं धवलकरे निशाकरे करैः सुधाधवलैर्यूथिकुन्दमल्लिकादिसुमनस्सु सौरभमातन्वत्सु मन्दं मन्दं वाति गन्धवाहे यामिन्यां सौन्दर्यशालिन्यां वृद्धिं गतः प्रमोद आवयोः परां कोटिमारुक्षत् । व्यस्मरं साकल्येनाहं पितुः शासनमुपदेशं धात्रीदेव्या निर्दिष्टायाश्च । चुम्बनं प्रथमं वल्लभस्य मे राकायां मनोहारिण्यां तस्यां पुलकिताङ्गयष्टिं मां व्यामोहयत्तराम् । नैकवर्षेषु व्यतीतेष्वपि तत्स्मरणमवर्णनीयभावं मय्युत्पाद्येदानीमपि रोमाञ्चयति मे शरीरम् ।

समाप्ताध्ययनः कुमारोऽयमष्टादशवर्षदेशीयस्तातपार्श्वे पाश्चात्यदेशानुयायिशिक्षणोपलब्धये प्रेरितः । संपाद्य कार्यं शीघ्रं निवर्तिष्ये स्वदेशमिति प्रतिश्रुत्य परदेशं प्रति स प्रतस्थे । अलेखीत् सोत्साहं तरुणोऽसौ प्रणयपत्राणि, परं न चिरादेव पत्रव्यवहाराद् व्यरंसीत् । अत्यन्तचिन्ताकुलस्तस्मै जनकदेवो मे वार्तासंदेशान् प्रेषितवान्, परं नोपलब्धोत्तरं चिराय नैराश्यात्पुनर्दर्शनाशामपि व्यजहात् । कियत्यसह्या व्यथा सोढा मया तस्मिन् समय इति वर्णयितुं न प्रभवेत् कोऽपि जनः । प्रियकरस्य पुनर्दर्शनसुखमाशु मे भवेदित्येकयैवाशया गृहीतान्तरात्मा स्थितास्मि । तदारभ्य च गतभर्तृकेव जीवनयात्रा नीतासीन्मया, परं स पुनर्मत्सविधं ध्रुवमायास्यतीति मद्धारणायामास्थिति चिरात् । परं च दैवज्ञोऽयं बधिरमूकोऽपि तथ्यं बोधयिष्यति मामिति समुपस्थिताहमत्रेति ।

समाप्तात्मकथाया युवत्याः स्वरध्वनिर्मन्दीभूय यवनपुरोहितस्य सायन्तनिकस्य भक्त्याह्वानस्य प्रतिध्वनिपर्यवसानमिव सस्वने ।

अथ निसृष्टान्यतमाह्वाना कृशाङ्गी श्यामवर्णापि प्रियदर्शना सामिपिहितमन्दास्यमन्दशोकाकुलमन्दस्वरा मन्दानाम्नी न्यगादत् ।

मन्दा — अयि सखि तव प्रेमवल्लरी सौन्दर्यामोदविषये लज्जितनन्दनदिव्यलता स्वप्ने दृष्टेवाद्भुततां गता विना दैवं तद्गुल्मान्तर्गतशोकभुजङ्गिन्याः किल ।

इत्युक्तवती मन्दाऽन्याभिस्तिसृभिर्नोदिता निजवार्तां निवेदयितुमारप्सीत् ।

मन्दा — महानगर्यां मोहमय्यां चिराङ्गीकृतप्रवासाभ्यां पितृभ्यां साकं न्यवसम् । प्राक्तनरूढ्यनुसारं संवर्धिता ताभ्यां बाल्ये प्राथमिकपाठशालायां केवलं कृताध्ययनाऽभवम् । उच्चशिक्षणविरोधी जनको मेऽब्रवीत्पठनेनैव स्त्रीणामन्याभ्यासाऽऽयत इति । तादृशविचारपरिणामतो हन्ताज्ञप्रायाहमस्थाम् । निर्निमेषमहनि बन्दीकृताया इव सदने कांश्चन बान्धवान् विना न कोऽपि मे दृष्टिगोचरोऽभूत् । अथ सामाजिकमण्डले कस्मिंश्चिन्ममाग्रजानां सह सुदर्शनेन केनचित्तरुणेन यदृच्छया परिचयोऽभूत् । कृताङ्ग्लद्वीपपर्यटनोऽयं युवा वर्णेन गौरो विशालनयनः शिष्टाचारेऽधिगतयाथार्थ्यसंस्कारः स्वदेशाचारविद्वेषी विदेशानभिज्ञान्मे बन्धून् मूढतमानपश्यत् । पाश्चात्त्यविविधदेशेषु वाणिज्यव्यवहारे ममाधिगतदीर्घानुभवेन मया वाणिज्यनियोगोऽन्विष्यत इति ममाग्रजेभ्योऽकथयदसौ । तदा मद्भ्रातॄणां व्यवहारदक्षं कञ्चिन्मार्गयन्तो जनकचरणा मे कुमारमिमं स्वकार्यालये द्रुतं न्ययुञ्जत । अथ गच्छति काले संप्राप्तपरिणयवयसि मयि योग्यवरान्वेषणपरावभूतां पितरौ, परं मदीयकुलपरम्परागतानां कोऽपि

मामुद्वोढुमुद्यतोऽभूत् । पर्यन्ते चिन्ताकुलो मे जनिता सहकारिणोऽस्य सन्निधे मद्विवाहविषयमधिकृत्य व्याजहार । दैववशाच्च चिरात्तरुणोऽयमदृष्टपूर्वां मां परिणेतुमुद्यत आसीत् । विस्मयस्य परां कोटिमारूढः प्राप्तस्वर्गद्वारमिवात्मानममन्यत जनको मे । हर्षोद्रेकपूरप्लावितः सुमहतीं संपत्तिभागिनीं मां विधाय युवानमेकमेव विधायकं व्यवास्थापयत् । अहं च नितान्तपरितुष्टा वशंवदा मदीयभाविपतिं तोषयितुमयतेतरां प्रत्यहम् ।

अथ निर्वर्तिते विवाहे यथाविधि वरो मां वीक्ष्य प्रथमतः शयनागारे न बभौ भग्नाशो नातिधीभन्सितो वा । पादयोस्तस्य प्रणिपत्याहमनुरागनिर्झरेण प्लावितात्मा प्रमोदाश्रुपूरेण तावत्प्लावयम् । स च किमप्यनुक्त्वा समुत्थापयामास माम्, चिरं च निशायां तूष्णीमवास्थिष्यावहि । अपाङ्गदृशा लावण्यजितमारं कुमारं दर्शं दर्शं पुलकिताङ्गयष्टिर्विस्मयसागरे न्यमज्जम् । क्व मदनभिज्ञता, क्व च तस्य वैचक्षण्यम्; क्व मत्कुरूपता, क्व च तस्य सुरूपातिशय इति ध्यायं ध्यायं गाढं समालिङ्गितुमुत्कण्ठिताभवम् । परं मत्तः स जुगुप्सितः स्यादिति भिया कम्पमानाऽवातिष्ठे नतानना निःशब्दापि ।

इत्थमुक्त्वा महसेयं सगद्गदितस्वरा व्यरमत् । अथान्याभिर्युवतीभिः पुनः प्रणोदिता पुनरुपाक्रमत निवेदयितुमवशिष्टवृत्तान्तम् ।

मन्दा — अथ मोहमय्यामेव पयोनिधेस्तटे दयितेन साकमल्पनिलये न्यवसमहम् । प्रारम्भे भृशं संभावितास्मि तेन । वसनाभरणाङ्गरागादिप्रसाधनसाधनानि परिधानोचितोपानत्पादुकाश्चाक्रीणात् स स्वयं मदर्थम् । अहं च सहर्षं सगौरवं सर्वमेव तेन नीतमुरर्यंकरवम् । परदेशीयोपानहोरपरिचितपूर्वाया मे पादौ संपीडितौ भृशमास्ताम्, परं नाथं प्रीणयितुकामया सर्वा वेदना असह्यन्त मया । प्रत्यहं सामाजिकक्रीडामण्डले स मामनैषीत् । विवाहात्पूर्वं गृहाद्बहिर्निर्गमनानभ्यासवशात् समाजव्यवहारानभिज्ञामाधुनिकशिष्टाचारं मामशिक्षयत् । पाश्चात्यदेशानुकारिणोऽस्य साम्प्रतिकरीतिमतादिभिर्वशीकृताऽऽसमचिरात् । अथ काले प्रसूताहं शिशुवर्धनादिकार्यबाहुल्याद्विहाराय सह तेन बहिर्गमने परित्यज्यालिलाइहो मन्दिरेऽनास्थिषि । क्रमेण मदवस्थितिमपि गृहे पतिर्मे न केवलमवागणयत् किन्तु डिम्भमपि मे। कृत्स्नश उपैक्षत । दिवा कार्यालये व्यापृतः सन्न न्यवर्तताऽऽलयमामध्यरात्रम् । कुतो विलम्बः क्रियते प्रतिदिनं गृहं प्रत्यागम इति पृच्छ्यमानो मया तिरस्कारापृष्ठी स्थितवान् । अथैकदा सूर्यास्तमनात्प्रागेव गेहं प्रत्यागम्य ससंभ्रममभ्यधात्—इतः सत्वरमेव गन्तव्यं मया । मदीयपितृपादा हि मरणोन्मुखा इति समुपलब्धवृत्तान्तस्तत्सविधं विना विलम्बं यास्यामि । पितृगेहं समापन्नमात्रस्त्वां पत्रं लेखिष्यामीति मुहुर्मुहुः प्रतिश्रुत्य सदनं व्यसृजत्प्राणेश्वरः । न कदापि पूर्वं निजपितरमधिकृत्याक्षरमपि प्रोक्तमासीत्तेन । अतः पितृहीनः स्यादेष इति तर्कितमद्यावधि मया । अथ प्रत्यहं तत्पत्रं प्रतीक्षमाणा सोत्कण्ठं सोत्साहमस्थामहम् । परं मासीर्धराशिं विना फलं प्रतीक्षाया मे । तस्य वृत्तविरोधोपलब्धये मम पितृचरणैर्यथाशक्ति प्रयेते किन्तु नैष्फल्यमेव प्रापुः प्रयत्नास्तेषाम् । व्यतीता इदानीं पञ्चाशः संवत्सरास्तस्य निर्गतस्य गेहात् । विना परेशं च न कोऽपि मनुजो

जानाति क्व वर्ततेऽसौ किं संवृत्तं तस्य वेति । दैवेन प्रेरिताहमत्र समायातास्मि दैवज्ञोऽत्र तथ्यं कथयेदिति । ओम् ।

समीरविधूतमुरलामकशाखिविनोदस्य मन्दस्वमिव मन्दायाः स्वरो मन्दमन्दो भूत्वा श्रवणपथस्यागोचरतां ययौ । क्षणमात्रं यावदत्र विलक्षणनिःशब्दता विराजते तावत्सर्वासु तासु मनोहारिणी मोहिनीनाम्नी तृतीयाङ्गना लावण्यतिरस्कृतानङ्गजाया सरोजनयना मुकुलिताङ्गयष्टिः सुवर्णवर्णा व्याहरत् । अयि सुखासुखे अपि दैवेन प्रकाशिते स्तः खलु, मदीयविषये त्वहमेव दोषास्पदीभूताऽस्मि । कस्यचिच्छ्रेष्ठिनो महानगर्यां निवासिनः कुलेऽहं प्रासगर्भभवाऽऽसम् । पितृभ्यामतीव लालितां प्राप्तयौवनां अहरहो युवानो मामुद्वोढुमहमहमिकयाभ्यार्थयन्त मदीयजनकम् । परं धनिकस्यात्मजां धनिकायैव देयेति कृतनिश्चयौ नवयौवनसुभिक्षमायां मां पितरौ मध्यवयस्केन केनचिद्धनाढ्येन भौमिलन्वणिजा सह परिणाययेताम् । वाणिज्यव्यवहाराय भर्ता मे मुहुर्मुहुर्भूतलेन्द्र-भवनायितं रमणीयतमं प्यारिसनगरं गच्छति स्म । एकदा च सह तेन तन्नगरमहमगमम् । नगरीयममरावतीमैन्द्रीमपरीकारिणी, यमुनाजलनिर्मलसीननदीललामभूता, लुवाद्भुलोयन्-तुलरीनामकविविधरम्यतमोपवनजितनन्दनवनरामणीयकशोभिता, फूनसा-नाविधसुन्दरासनविलम्बवीलोग्नजलाशयसुषमानिधेर्देवता, आर्कदत्रियोम्फनामकविशाला-ध्वसंगमभूषिता, शान्जलीसनामकदेदीप्यमानविस्तीर्णराजमार्गविराजमाना, निखिलमही-तलदेशीयाश्रयभूता, नाट्यसंगीतनृत्यचित्रशिल्पादिकलाधाम, असंख्यपुरुषोत्तमसदृशी-धिजनगुम्फिता, मोत्रदाममादूलन्याकेत्रायद्रिर्यापदेयनालयपवित्रीकृता, शिल्पर्गान्दर्यंस-मलंकृता, विपणीरागायनरचितरचिताम्बररत्नहेमपात्ररत्नरचितालङ्कारादिभूषिता मां नितान्तं व्यमोहयत् । दिवसे कस्मिंश्चिद् क्रियातो मार्गो नगर्यामस्यां एदूआर्नामा बहुगृह-द्वारगृहसंलग्नः । एकस्मिन्कक्षे तेयां प्रतिदिनमाहारमुपभुज्य निवासं निवर्तमानयोरावयोः पतिर्मे सुखं मां विसृज्याप्रार्थयैहितेवास्त । दैनिकक्रमोऽयं विलक्षणः प्रावर्तत यद्विषयं कालम् । पर्यन्ते चिराचरितदुराचारमलकंबमेनम् ।

अथैकदा भोजनावसरे कश्चित्पत्रवाहकः पत्रमेकमानीय हस्ते मम पत्युः समर्पितवान् । पठित्वा तु तद् विवर्णवदनः सहसामनादुत्थाय प्रतीक्षस्व क्षणं तावत्तथैवमेव निवर्तिष्य इति प्रतिशृण्वकामिनी मां तत्र विसृज्य ससंभ्रमं भोजनालयान्निर्ययौ । तमहमेकां होरां प्रतीक्षमाणा तत्रैवोपविष्टाऽस्मम् । न तु प्रत्यागमद्राक्कोऽयम् । अत्रान्तरे यथा यथा सुखमरो जगा अधिकाधिका आयसुप्ताया तथा मत्तोलासमाद्भुतिभाऽभवम् । अस्मन्वस्तिमिति भोजनस्य व्ययमूल्यस्य प्रदित्सया धनकोशमात्मनो यावदपावृणोमि तावत्तेरकाय पारितोषिकप्रदाना-यापि पर्याप्तं धनं न विलोकयामीति नितान्तं लज्जिताभवम् । भाग्यादिष्टया भारतीयवन्द्रस्यः कश्चित्पर्जन्यनीरवर्षिर्भोजनकक्षान्तरमतिधें भुञ्जान उपविष्टः । सोऽयं ममानदेशी प्रत्यक्षम-दर्शि मयात्र । मन्येऽस्मिन् विलोक्य संभ्रान्तां मां दीयि म अदन्तिकमुपेत्य साहाय्यं विधीर्षुर्ममानुनामपाक्त । उपकृतास्मि भवतेत्युक्ते अथा नन्दितेव भोजनमूल्यं मदाय गृहम्यासिने अधिकामं सादरं मार्जनीय । तदारभ्य दर्शनीयतमारागृहमिंदायो गौरवर्णो

युवासौ प्रतिदिनमादौ भोजनालये तदनु विहारभूमौ उपवने वा माममिलत् । ततश्च परस्परसंगतिसुखमावामन्वभवाव । न चिराच्च परिचयश्चावयोर्वृद्धिं गतः । मिथः संभाषण-सहवासविनोदक्रीडादिना प्रेमबंधो नौ सलीलमचिरादतिगाढोऽभूत् । अथ मासाभ्यन्तरे यद्यदासीन्मत्सविधे तत्सर्वमपि संगृह्य प्रणयिना सार्धमौजिसदेशं प्रति निभृतपलायनम-करवम् । प्राप्य तत्र कस्यांचित् समुद्रतटवर्तिन्यामविख्यातग्रामटिकायामावाममन्दानन्द-तुन्दिलौ मासषट्कं न्यवसाव । सोद्वेपं सोत्कटं स मां चकमेतराम् । अमितप्रेम वल्लभस्य मे क्वचिन्मयि भयमजीजनत् । तथा हि प्रेमशङ्का तस्य तत्प्रेमापेक्षयापि बलीयसी बभूव । प्रेमशङ्काशीलः स क्वचित्कारयदात्मानमेतावद् हास्यास्पदं यत्तमुपहासार्थमेव पीडयितुमस-कृदक्रीडि मया । अथैकदाम्बुनिधेस्तीरे स्नानार्थं याते तस्मिन् सुहृदा सह केनचिन्नैरोनामिकां राजधानीं प्रति यामीति संदेशं पत्रे लिखित्वा मन्दिराद्विरगमम् । सर्वमिदं विनोदार्थमेव चेष्टितमासीन्मया । परेद्युः प्रेमनिलयं नौ निवृत्ता तमनाथीभूतमवालोकयम् । अस्मद्-गृहस्थानदेशीयसेवको मदतर्कितनिर्गमजन्यविप्रलम्भाभिभूतस्य वल्लभस्य मे नैराश्याग्नि-ज्वालामज्जनं न्यवेदयत् । अथानुतापानलसंतप्तया मया सर्वतस्तमन्वेषयन्त्या न नैराश्यं विना फलमुपालभ्यत । पर्यन्ते गतिमन्यामपश्यन्ती स्वदेशं पुनरागमम् । मदागमनात्प्रागेव हन्त पितरौ मेऽपरिमितसंपत्तिभागिनीं मां विधाय दिवं गतौ । परं धनसंपन्नाया अपि मे सुखलेशमपि न विद्यते । विनानुरागं हि प्रणयिनः प्रमदाया जीवनं व्यर्थमेव खलु । सर्वतः शून्यतैव प्रतिभाति मे । वार्धक्यं चासन्नप्रायम् । इति कथयन्त्यास्तस्या वचो यत्सुन्दरमासीत्तदिदानीं शिथिलीभूय शनैराकाशे विलीनतामयासीत् ।

अथ ज्येष्ठा तासु योषित्सु दयानाम्नी व्याहरत्—"अयि कथं वृद्धा स्यात्त्वम् । वयसाहं त्वत्तो ज्यायस्यपि प्राणनाथस्य मे संदर्शनपिपासया व्यथितास्मि"। इत्याख्याया-ङ्गणस्य समीपवर्तिनः स्तम्भस्य पृष्ठभागे विलीय पुनर्दृश्यतां यदागतासीत्तदा प्राप्तरूपान्तरा सा बभौ ! तदीयसान्द्रमेचककेशकलापस्य स्थाने धूसरवर्णविरलविरलकेशतन्तव एवासञ्छिरसि तस्याः । तदाननाकारो निम्नभागनिमग्नः सद्यो विसृष्टकज्जलं निस्तेजश्च तन्नेत्रयुगलम् । तदीयसहचर्यस्तस्यां बद्धदृष्टयः काष्ठविग्रहा इव चित्रलिखिता इव संवृत्ताः । क्षणोत्तरं निजकथानिवेदनमुपाक्रमत दया ।

दया—कस्याश्चित् संगीतकुशलाया गणिकायाः कुक्षे गृहीतजन्माहम् । गायन-शिक्षकमेकं प्रत्ययसमन्तरा न केनापि पुरुषेण सह परिचयमनुमेने प्रसूर्मे । षोडशवर्ष-कल्पाऽभवं यदा तदा मदीयाम्बा बहुभिस्तरुणैर्धनाढ्यैः सार्धं कुमोगार्थं मत्समर्पणसन्धानं कर्तुं समुद्यताऽभवत् परं गणिकाजीवनमसहमाना नैसर्गिकधीरतया तन्मनोरथानुवर्तनात् पराङ्मुखी सुनिश्चयमास्थाम् । तथापि मत्सङ्कल्पमविगणय्य केनचिद्धनिना क्षेत्रपतिना सार्धं मोहविषयव्यवहारः समपाद्यत तया । अथावयोः प्रथमसंगमात्प्रागेव मातुरालयान्निभृतं पलायिताहम् । तत्र पुरात्पुरमटन्त्या दीनहीनाया मे वार्तां श्रुत्वा दयालुः कश्चित्पुरोहितो भृशमार्द्रीभूय स्वगृहे प्रदाय संश्रयं मे, क्रमेण मां पुत्रीकृतवान् । दश वर्षाणि महानुभावेन करुणानिधिना तेन स्वकन्यानिर्विशेषं पाल्यमाना लालिताऽध्यापिता चोद्गुणावनिमण्डले

ग्रामटिकायां कस्याञ्चित्पयोनिधेस्तटवर्तिनि गृहे सुखं न्यवसम्। मामन्तरा नासीदन्यः कोऽपि तमन्वासितुम्। यतः प्रसूतिसमये तद्देहिनी विंशतिवर्षीया सार्भका कालवशं गतासीत्, न चान्यमुपायंसीद् भूसुरवरोऽयम्। अथ गच्छति काले समारूढनिर्भरयौवनां मां परिणाययितुं सुतरां प्रायतन्त पितृपादाः, परमाकर्ण्य कर्णपरम्परया संभवं मे न कोऽपि तरुणो मत्पाणिग्रहणं प्रत्यपद्यत। विव्यथेतरां पूज्यतमजनकदेवस्य हृदयं दर्श दर्श मामनूढां प्रतिवर्षं वर्धमानां च वयसा। सत्रापेक्षया बलीयस्याशेति मद्विवाहविषये सम्प्रत्याशोऽवतस्थे स आजीवम्। अतिक्रान्तषड्विंशतिवर्षायां मयि पितृपादा दिवं गता विसृज्य मे सर्वमेव स्वार्जितं वित्तमालयं च। ततः परं निष्ठैकावलम्बनाहं चिरं पितृदेवानां मृत्युं विलपन्ती नामशेषाणां तेषां स्मृतिं पूजनीयां निरन्तरं दधाना हृदि तस्मिन्निहरे न्यवसमेकाकिन्यहम्।

अथैकदा सायं समुद्रतटे शतपदीं कुर्वाणा गण्डशैले शयितं कञ्चिन्मूर्च्छाभिभूतं युवानमद्राक्षमहम्। सोऽयं गौरवर्ण आयतललाटो दीर्घबाहुस्तरुणत्रिंशद्वर्षदेशीयो दृढकायो म्लानमुखो मन्दं मन्दमश्वसीत्। यथा यथा तदीयगण्डस्थलमस्पृशं तथा तथाऽपूर्वविविधमिश्रभावनातरङ्गाभिभूताऽहम्। चिराद्विनष्टोपलब्धबालका प्रसूरिव परितोषस्य परां कोटिमरुक्षम्। यौवनचुम्बिताननमालोकयन्त्यास्तस्य मे वक्षःस्थलं सरभसमस्पन्दत। अथ ■ केषाञ्चिन्मत्स्यजीविनां साहाय्येनानीयत मद्गेहम्। झञ्झावातेन प्रोषकैराक्षिप्तः कल्लोलमालिकाभिः प्रहतः पोतः क्वचित्सागरस्याम्भस्यमज्जत्। दैवगत्या तु तरुणोऽयं प्रभाते तीरभूमिमगमदिति तन्निवेदिताऽऽसमहम्। द्वित्रघटिकोत्तरं लब्धसंज्ञस्य तस्य स्मितमविस्मरणीयं मे न्यवेद्यपक्षभूतं वस्तुजातम्। तदनु स कियतो दिवसान् सामिमूर्च्छादशायामवतस्थे। क्रमेण च प्रकृतिमापन्नोऽभापतापमेव। साग्रहमनुयुक्तोऽपि स्वपूर्ववृत्तान्तनिवेदनेन मत्कुतूहलं परिपूरयितुं स्मृतिभ्रंशान्न स प्राभवत्। अहं च तत्पारतन्त्र्यादधिकाधिकं तस्मिन् स्नेहबद्धाभवम्। कदाचित्संभ्रान्तमनाः प्रष्टव्यार्थं स्मृतिफलकात् परिमार्ष्टुं यतते स्म। अथ गच्छत्सु मासेषु मामवधातुमारप्सीदसौ। मदीयवसनाभरणनयनाञ्जनपाणिरुहरागादिकलापः क्रमेण तद्दृष्टिविषयोभूत्। ततस्तस्मिन् प्रेमाङ्कुरोदयलक्षणान्यपश्यम् तदवलोकनेन सुतरां मनसिजशरविद्धेव रोमाञ्चिताङ्गी स्वान्तर्भावविकारमगोपयमहं समयन्नं ततः। सोपि पृथग्भावमाश्रित्य चिन्तापरो नित्यमास्त। अथैकदा सायमुद्याने विहरतोरावयोरवादीत्स युवा गन्तव्यमिदानीमितो मयेति। वचस्तस्याकर्ण्य सुतरामवदीर्णहृदयेव विषण्णान्तरात्माऽवोचम्। क्व प्रस्थास्यते त्वयेति। यत्र कुत्रापि, अलं चिन्तया मदर्थमिति सन्निशिथिलवचनविन्यासं सशोकं च ■ प्रत्युवाच। इत्थं ब्रुवाणमेनं परिसान्त्वयितुमालिङ्गितुं च भृशमैच्छम् परं लज्जया तदप्रसादभिया चावरुद्धा क्षणं जोषं स्थित्वाऽप्राक्षमहम्——किमितो निर्गन्तुमुद्यतोऽसि। अपि नास्ति क्षेमं तवात्रेति पृष्टः कृतज्ञतासूचकं हस्तनिक्षेपं कुर्वाणो निरुत्तरोऽवतस्थे स युवा। अपि स्ववृत्तिं पुनर्ग्रहीतुमिच्छसि प्रायः, किं निकटबान्धवानाहोस्विद्दिदृक्षुरसीति मयानुयुक्तः प्रत्युत्तरमदत्त्वा सकन्धरकम्पं तूष्णीं स्थितवान्।

अत्रान्तरे धवलयति वसुधातलं धवलकरैर्धवलरश्मौ धवलोज्ज्वलताप्लावितमुद्यानमिदम्। चरणपर्यङ्कपल्लवखण्डानि देदीप्यमानान्यभ्यन्युपलानीव विलक्षणभावोन्सेकं मय्यजीजनन्। स एव क्षणो निश्चायको मज्जीवनस्येति प्रतीताभवम्। शनैः सभयं तत्करमादाय समार्दवं परामृशम्। निजपारतन्त्र्यमाविष्कुर्वन् सविश्वासं सविनयं चान्वमंस्त तेन महस्तग्रहणमात्मनः। क्वचिदुत्कण्ठिता क्वचित्संभ्रान्ता क्वचित्कम्पमाना क्वचित्संत्रस्ताहं कियन्ति क्षणानि जोषमस्थाम्। अब्रवीच्च स तावत्—अहो भवत्परमसौजन्यभारेणाभिभूतोऽस्मि किल। न नु भवत्याः प्रेमपात्रं भवितुमर्हति जनोऽयम्। वचनं तन्निशम्य मदीयकरो निःसत्त्व इवागलत्तदीयहस्तात् अभाणि च कथमपि मया—"भवन्तं परिपिन्वमानामन्दानन्दतुन्दिलास्मि। एकाकिन्येवास्मि मन्दिरेऽस्मिन्। सदैव भवतां पदाब्जयुगसमुपासितुमनुमोद्यतां जनोऽयम्। अस्ति पर्याप्तं धनं मत्सविधे उभयोरावयोः पोषणाय"। इत्युक्त्वा रुद्धकण्ठा व्यरमम्। स च मां सदयमालोकयन्मत्करं परामृशत समार्दवम्। निजपूर्वकथास्मरणाग्निना तप्यमान इव स प्रत्यभात्। कयापि निर्दययाङ्गनया कश्चित्प्रवञ्चितः स्यादिति व्यतर्कि मया। परं नाक्षरेणापि तेन किञ्चिदपि व्यक्तीकृतम्। मौनमस्य तावन्मां किञ्चिदाधामयामास। चिरं च पतत्रिकुलकूजितं वनिष्टभलाशयनिर्झरध्वनिं श्रावं श्रावं चन्द्रिकाया रामणीयकेन महदानन्दर्द्धौ कुन्दकुसुमैः सुवासिते लतामण्डपे जोषमवास्थिष्वह्यानिशीथम्।

परेद्युः प्रातस्तरां यदा जागरिताऽहं तदा हृदयवल्लभस्य शय्यागारं रिक्तमलोकि मया। दुग्धापूपादिकप्रातराशं परिवेषयितुं तस्मै गृहतलं यावदवारोहं तावन्मुखशालायां मध्यस्थफलकोपरि स्थापितं तद्धस्तलिखितं पत्रमेकमद्राक्षम्। सवेपथुरथसत्त्वगात्री सचकितं सभयं पत्रं तदपठं यथा—"भवत्याः सौहार्दातिशयभारेण सुतरां निर्जितोऽस्मीति वचनं पुनरुक्तिरेव स्यात्खलु। अयोग्यस्तु जनोऽयं भवत्या विस्मरणीयः। सन्ति मदपेक्षया परश्शता जना भवत्सौजन्यार्हाः। अज्ञातक्षुद्रजनस्यास्यानेकविनतयोऽङ्गीक्रियन्तामिति प्रार्थये। स्वस्ति भवत्यै"। इति स्वल्पसंदेशं हृदयेश्वरस्येमं पठित्वा निश्चला चिरमवातिष्ठेऽहम्। निखिलाहनि सर्वतस्तं गवेषयामासुर्ग्रामवासिनः परं हन्त न केनापि विलोकितोऽसावाग्रामाग्रादासूर्यास्तमनम्। ततश्च तन्त्रीद्वारा संदेशाः प्रेषिता मया समीपवर्तिनगररक्षाधिकारिभ्यस्तद्गतस्योदन्तोपलब्धये। महार्हपारितोषिकप्रदाने शोधकाय प्रतिश्रुतेऽपि नैष्फल्यमन्तरेण नान्यत्फलमुपानतं गवेषणस्य। अहं च पातालतलमवतीर्णेव क्वागमं किमकरवं क्वास्वपं किं भुक्तं किं पीतं केन सेवितेति न किञ्चिदप्यज्ञासिषम्। अनेकजन्मसहिष्णोर्मम कस्यापि जन्मान्तरोपात्तस्य कर्मणः फलेनानेन भाव्यम्। आदौ हि कामवराको मामपारानन्दपयोनिधौ विनिमज्ज्य ततो हृदयेश्वरसमागमसुखनगशिखराद्विरहान्धकूपे न्यपातयत्।

इत्युक्त्वा दीना रुद्धकण्ठा शिथिलवचनविन्यासा विललाप सकरुणं दया। निशम्य च दयाया दयनीयकथां स्वस्वदयितार्थिन्योऽङ्गनास्तिस्रस्ताः सद्याम्बुनयना बभूवुः। न चिरात्सर्वा इमाश्चतस्रः स्वस्वकल्पितस्थानं गन्तुं पचुलकुसुमगुच्छहस्ता देवमन्दिरं प्राविशन्। दैवतस्यांसे गुम्फे स्वस्वहृदयेश्वरस्य नामाक्षराणि पुष्पैरालिख्य परेद्युस्तत्र पुनरागमन-

॥ श्रीगणेशाय नमः ॥

# ८. स्वाप्निकव्यामोहः

अकस्मादुत्थितो झञ्झावातः प्रचण्डः। मृदुलधवलवालुकापटलेनापहृतः सर्वतो दृष्टिगतप्रदेशः। प्रभञ्जनवात्योद्धतामी रेणुकाभिः शुष्कशीर्णपत्रनिकरैः पुनरेष द्वैगुण्यं प्राप्य कुटिलाकारो धूसरपीतवर्णसमुच्चयः सरभसं विदूरमम्बरान्तः सहसावपत्याधश्च घूर्णयन्मानवानक्षिविवराणि सर्वाणि पर्यपूरयन्नयनयुग्ममन्धीचकार, उच्छ्वासं च प्रत्यरुणत्। सायन्तनोऽन्धकारस्ततोऽपि द्विगुणितो मेघमालाभिः। अध्वनः सूक्ष्मरेखा भीषणनिर्जलमरुस्थल्यां सर्पन्ती शून्यशिखरश्रेणीतः शिखरश्रेणीम्, अरण्यादरण्यानि प्रचण्डोष्णसिकतास्तम्भकाण्डे खण्डिताभूत्। नास्ति सरलो मार्गो नातिविषमा भूमिर्वा, नावलोक्यते पन्थाः कोऽपि वा। यस्मिन् विलक्षणमिदं प्रयाणं मयाङ्गीकृतमासीत्सोऽपि महासार्थः क्रमेण क्षीणक्षीणोऽभूत्। मामन्तरा च सार्थवाहेन सह सर्वेऽपि यात्रिका एकैकशस्तिरोऽभवन्। अतिश्रान्तः पिपासाकुलो शरीर एवावशिष्टो मे सहायः। अल्पस्पानसामग्रीभाग् परिमिताश्च भोजं भोजं पर्यवसितनिखिलाहारः प्रतिघटिकं जलबिन्दुभिः स्वल्पैरात्मानं परितोषयन् न चिरात्क्षीणशीघ्रगामग्रस्तश्वासवसत्त्वः समभवम्। असहायः सन् गात्रचालनाक्षमः क्रमेण जडतां नीतोऽहम्। रेणुरूषितरोमकूपो झञ्झावातोत्स्फालितमृत्ताडितोऽसह्यवेदनामर्दितमस्तकः प्रमत्तपिपासाकुलीभूतो मृतप्रायः स्थितवानहमेकाकी। परं दृढसङ्कल्पोऽहमभीष्टस्थलाभिगमनान्न व्यरमम्। अथानवरतं वालुकाघनराशिभिः प्रहतः प्रचण्डवाताघ्रातशीर्णपटकुटीरे गतिमन्यामपश्यन्नाविशि अवापमधोमुखः। तदारभ्य कियत्कालं यावत् किमुपवृत्तं मे केनावष्टोभितः कियन्तं वा कालं नष्टसंज्ञः स्थितोऽहमिति न जानामि किमपि मत्स्मृतिमार्गमायाति सम्प्रति। अद्वितीयः पटकुटीरे शायित एकाकिपदमात्रमधिकृत्य ध्यायं ध्यायं पुनरस्तं कालमवास्थिषि।

तूष्णीं स्थितवान्। विनष्टासोः पुनः पुनः समाश्लजीवितस्य कस्यचित् मनुष्यस्यालोकनेनेव, क्वचिदप्रत्ययं क्वचिद्विस्मयं सूचयता विशालनयनयुग्मेन मामनिमिषं न्यरूपयत्। तस्य वलिनग्रीवाया अवलम्बमाना रुद्राक्षमालातिदीर्घोपयोगादिव जीर्णप्राया तत्तुहिनश्वेतकूर्चश्च प्रतिक्षणविगलत्कचतन्तुः कृशतां भेजे। तथापि प्रासेद्गतप्रसादचिह्नस्य वलिनभूतस्यानने तस्य प्रत्यभाद्रात्मसंयमप्रशान्तताभक्तिवैराग्यादीनां किमपि निदर्शनं तेजो विस्मयकारकम्। सूक्ष्मं निरीक्षमाणायां दृशि तस्य व्यराजत स्थैर्यानुकम्पौदार्यादिगुणरत्नसन्दोहः। अथ मुहूर्तं मरुस्थली विलक्षणं परिवर्तनमवाप। सर्वमप्यस्फुटं स्पर्शागोचरमिव दध्रे। श्वेतसिकतावर्तो मञ्जीर्णकुटीरमास्फालयंस्तत्र्संख्यविवरान्तर्लब्धप्रवेशः सवेगं पर्यभ्राम्य- दभितः। पुञ्जीभूतवालुकासन्दोहेन क्षणार्धमन्धीकृतः सम्भ्रान्तचेता निश्चलश्चाहमवा- स्थिषि। पलितशिराः गलितवयस्कोऽयमध्वगः पितृजनादुत्थित इव प्रत्यभान्मे। नैविष्टतामुपेतस्य तस्याकारः काल्पनिक इव ययौ। अविश्वासोत्क्षिप्तं स्मृतिलोपाभिभूतं प्रचण्डज्वालापान्थपिपासार्दितकण्ठं स्थविरस्यास्य पृच्छासूचकं निरीक्षणं मामसंवादिनमकरोत्। क्वाद्यतनसमये गन्तुमुद्यतोऽसीति पप्रच्छैष आयताक्षियुगलेन सूक्ष्ममसृणभ्रूलताच्छादि- तेनाविरतं निरूपयन्माम्। सुवर्णमयीं नगरीमिति कथमपि समुदीरिते मया [illegible] नितम्बनिहितकरो लोलश्वेतकूर्चो दयार्द्रस्मितास्यः प्रवया इङ्गितेनैव सुवर्णनगरीं प्रति मत्कल्पितां यात्रामभ्यनन्दत्। ततश्च मधुरया गम्भीरया च गिरा प्रोक्तवान्। आः! सुवर्णपुरीम्? अद्भुतनगरीम्? यात्रेयं पवित्रीकरिष्यति तवात्मानम्। अप्यस्ति ते विश्वासोऽद्भुतचमत्कारे सुवर्णनगर्यास्तस्याः पवित्रगिरिकन्दरे च। इति स्वप्रतिपादनस्यः साक्षात्कारादिव मां वशीकर्तुमिवाप्राक्षीत्सः। अपाठि मया तन्माहा- त्म्यस्य वर्णनमित्यस्पष्टमवोचम्। अपि जातुचित्पृष्टस्त्वयास्मा किमिति सुवर्णपुरी जीवनाखिलसुखोपपन्ना स्यादिति, किमिति, सा व्याधिदुर्भिक्षविप्लवविमुक्तेति च पुनः स प्रवया मामन्वयुङ्क्त। शिरो यावद्विधूयते मया तावत् स्ववचसोच्चैरुर्ध्वः समुद्धत इव तत्स्मृतिसौन्दर्योत्प्रेक्षपद्मास्थ इव प्रत्यभात्। क्षणोत्तरं च सुवर्णपुरेतिहास- माख्यातुमुपाक्रमतातिगम्भीरया गिरा—"अहो सुवर्णनगरी बभूवैतस्या निरानन्दा मरुस्थलीव यावन्न पवित्रीकृतासीत्केनापि दिव्यशक्तिना सिद्धात्मना। सततमुदासी- नानामपि प्रतनुप्रभावाणां सान्निध्यात् तपस्विनां दुःसहं दुःखमपनीयते, किमुतेदृशानां सन्तोषामृततृप्तानां सिद्धिमार्गोपदेष्टॄणां महात्मनाम्। विपद्ग्रस्तामबलामभ्यरक्षदात्मानं निर्मोक्तुं धरातलमागतः साक्षाद्विष्णुरिव स पुण्यात्मा।" इत्युक्त्वा क्षणार्धं सं व्यरमत्सा- कल्येन स्ववृत्तान्तं मच्चेतसि दृढं निवेशयितुमिव। ततोऽभ्यधात्पुनः। "दिव्यपुरुषोऽयं नूनं सत्याय धर्माय [illegible] स्वप्राणानुपाहरत्। मद्वचसि श्रद्दधासि चेन्मामनुव्रज, अहं सुवर्णनगरीं दिव्यकन्दरां च नयेयं त्वाम्।" इति सामर्षं निर्दिष्टवति तस्मिन् सद्यः समुत्थाय वमेतं मरुदेशं प्रत्यन्तसरम्। देशं तं सम्प्राप्य, किञ्चित्पर्यटनं च कृत्वा पश्चिमोत्तरदिशि शुष्कविजनवनस्पतिविरहितस्य पर्वतस्याधो विशालां नगरीमेकामद्राक्षम्। तन्मन्दिराणां सुवर्णशिखराण्यभितप्रदोषे देदीप्यमानानि दूरात्सन्तप्तचामीकरमिव चकासिरे।

॥ श्रीगणेशाय नमः ॥

# ८. स्वाप्निकव्यामोहः

अकस्मादुत्थितो झञ्झावातः प्रचण्डः। मृदुलधवलवालुकापटलेनापहृतः सर्वतो दृष्टिगतप्रदेशः। प्रभञ्जनवात्योद्धतामी रेणुकाभिः शुष्कशीर्णपत्रनिकरैः पुनरेष द्वैगुण्यं प्राप्य कुटिलाकाशो धूसरपीतवर्णसमुच्चयः सरभसं विदूरमम्बरान्तः सहसावपत्याधश्च घूर्णयन्मानवाननविवराणि सर्वाणि पर्यपूरयन्नयनयुग्ममन्धीचकार, उच्छ्वासं च प्रत्यरुणत्। सायन्तनोऽन्धकारस्तत्रोऽपि द्विगुणितो मेघमालाभिः। अध्वनः सूक्ष्मरेखा भीषणनिर्जल-मरुस्थल्यां सर्पन्ती शून्यशिखरश्रेणीतः शिखरश्रेणीम्, अरण्यादरण्यानि प्रचण्डोष्णसिकता-स्तकाण्डे खण्डिताभूत्। नास्ति सरलो मार्गो नाविषमा भूमिर्वा, नावलोक्यते पन्थाः कोऽपि वा। यस्मिन् विलक्षणमिदं प्रयाणं मयाङ्गीकृतमासीत्सोऽपि महासार्थः क्रमेण क्षीणक्षीणोऽभूत्। मामन्तरा च सार्थवाहेन सह सर्वेऽपि यात्रिका एकैकशस्तिरोऽभवन्। अतिश्रान्तः पिपासाकुलो दासेर एवावशिष्टो मे सहायः। अत्यल्पान्नसामग्रीभाक् परिमिताद्यं भोजं भोजं पर्यवसितनिखिलाद्यांशः प्रतिघटिकं जलबिन्दुभिः स्वल्पैरात्मानं परितोषयन् न चिरात्क्षीणक्षीणगात्रस्ततश्चावसन्नसत्त्वः समभवम्। असहायः सन् गात्रचालनाक्षमः क्रमेण जडतां नीतोऽहम्। रेणुरूषितरोमकूपरो झञ्झावातोत्स्फालित-मृत्ताडितोऽसह्यवेदनामर्दितमस्तकः श्रमक्लान्तिपिपासाकुलीभूतो मृतप्रायः स्थितवानहमेकाकी। एवंसङ्कल्पोऽहमभीष्टस्थलाभिगमनाच्च व्यरमम्। अथानवरतं वालुकाघनराशिभिः प्रहतः प्रचण्डवाताध्वशीर्णपटकुटीरे गतिमन्यामपश्यन्नशयिषि ओपमधोमुखः। तदारभ्य किमभवत् पश्चात् किमुपनतं मे केनावष्टब्धोऽस्मि कियन्तं वा कालं नष्टसंज्ञः स्थितोऽहमिति न जानामि किमपि मत्स्मृतिसरणिमायाति सम्प्रति। अद्वितीयः पटकुटीरे शयित एकवि-षयमात्रमधिकृत्य ध्यायं ध्यायं युगकल्पं कालमवास्थिषि।

अमूल्यमतुलमुद्दिश्य किञ्चित्पुरातनगिरिकन्दरं सातुलेतिहाससमुच्चयम्। चिरा-त्स्मैकमदन्तरेषा दुष्करप्रवाससाहसाय मां व्यलोभयदद्भुतेतिहासश्रवणरोमाञ्चिताङ्गं मां यथेह समाप्तप्राया वार्धक्यागमादीर्घप्रयाणस्य कष्टं सोढुमक्षमो भवेयमिति प्रागेव तद्द्रष्टुं समुत्कण्ठोऽभवम्। परमिदानीं नैकतिथं कालं प्रचण्डोष्णदन्दह्यमानशरीरः पर्यट्य विजने प्रदेशे स्थानविच्छेदसम्भावनया भग्नमनोरथो विमनस्कश्चाभवम्। तत्प्रथितगुहामाहात्म्यं यन्मया पुनः पुनः मनोदृष्टिविषयीकृतमासीदिदानीं काल्पनिकमेव मे प्रत्यभात्। मदभीष्टस्थानसन्दर्शनमप्राप्यं मन्वानो निराशया विदीर्णहृदयोऽभवम्। दुराशापरवशस्य हृदयं यन्मां पूर्वं बलाद्वै व्यधात् तदिदानीं प्रत्यावर्तनसरणिस्थानु यातं मां व्यचिन्तयत्। पर्यन्ते मदीया क्लेशमयी विचारसरणिः सहसा खण्डितासी-त्तान्तता च सद्यो व्यरमत्। सर्वतः शून्यशून्यता। निःशेषतः ध्वनिलोपोऽपि।

अथाग्न्यावृत्तः सितजटाश्मश्रुधाराविरलकेशविदीर्णगात्रः प्रवयाः प्राचीनतम-मनुष्यमेधपूर्वकालसमयवर्त इव। *हिमखण्डहैमाभोल्लसल्लोहरवस्तान्द्रजटादिशुनिवेधयाधर्य* गाणतोऽग्रातत्रिमनपलो महातेजा मन्दरवेण मातुरोष्य गभीरध्वना निवेद्य मां क्रमे

तूष्णीं स्थितवान्। विनयसोः पुनः पुनः समासन्नजीवितस्य कस्यचिन् मनुष्यस्यालोकनेनेव, क्वचिद्भयं क्वचिद्विस्मयं सूचयता विशालनयनयुग्मेन मामनिमिषं न्यरूपयत्। तस्य वलितग्रीवाया अवलम्बमाना रुद्राक्षमालातिदीर्घोपयोगादिव जीर्णप्राया तत्तुहिनश्वेतकूर्चश्च प्रतिक्षणविगलत्कचतन्तुः कृशतां भेजे। तथापि प्रसेहवसादचिह्नस्य वलिनभूतस्यानने तस्य प्रथमादात्मसंयमप्रशान्तताभक्तिवैराग्यादीनां किमपि निदर्शनं तेजो विस्मयकारकम्। सूक्ष्मं निरीक्षमाणायां दृशि तस्य व्यराजत स्थैर्यानुकम्पौदार्यादिगुणरत्नसन्दोहः। अथ मुहूर्ते मरुस्थली विलक्षणं परिवर्तनमवाप। सर्वमप्यस्फुटं स्वप्नगोचरमिव भासे। श्वेतसिकतावर्तो मजीर्णकुटीसमास्फालनव्यस्तद्भंग्यविवरान्तर्लब्धप्रवेशः सवेगं पर्यभ्राम्य- दमितः। पुञ्जीभूतवालुकामन्द्रोहेन क्षणार्धमन्धीकृतः सम्भ्रान्तचेता निश्चलश्चाहमवास्थिषि। पलितशिरा गलितवयस्कोऽयमध्वगः पितृवनादुत्थित इव प्रत्यभान्मे। नेदिष्ठमप्येतस्य वस्त्राकारः काल्पनिक इव यमी। अविश्वासोऽक्षिप्त स्मृतिलोपाभिभूतं प्रचण्डातपपिपासार्दितकण्ठं स्थविरस्यास्य पृच्छासूचकं निरीक्षणं मामसंज्ञान्तरितमकरोत्। क्षणवनसमये गन्तुमुद्यतोऽसीति पप्रच्छैव आयताक्षियुगलेन तत्कुसुमसमणभ्रूलताध्यादिष्टेनाविरतं निरूपयन्माम्। सुवर्णमयीं नगरीमिति कथमपि समुदीरिते मया स नितम्बनिहितकरो लोलश्वेतकूर्चो दयार्द्रस्मितास्यः भवया इङ्गितेनैव सुवर्णनगरीं प्रति मत्कल्पितां यात्रामभ्यनन्दत्। ततश्च मधुरया गम्भीरया च गिरा प्रोक्तवान्। आः! सुवर्णपुरीम्! अद्भुतनगरीम्! यात्रेयं पवित्रीकरिष्यति भवदात्मानम्। अप्यस्ति ते विधानोऽद्भुतचमत्कारे सुवर्णनगर्यास्तस्याः पवित्रगिरिकन्दरे च। इति स्वप्रतिपादनस्य साक्षात्कारादिव मां वशीकर्तुमिवाप्राक्षीत्सः। अपाठि मया तन्माहात्म्यस्य वर्णनमित्यस्पष्टमवोचम्। अपि जातुचिन्मृषैतस्यास्था किमिति सुवर्णपुरी जीवनाखिलसुखोपपन्ना स्यादिति, किमिति, सा व्याधिदुर्भिक्षविलयविमुक्तेति च पुनः स भवया मामन्वयुङ्क्त। शिरो यावद्विधूयते मया तावत् स्ववचसोच्चैरूर्ध्वः समुद्गत इव तत्स्मृतिसौन्दर्योर्ध्वपदमारूढ इव प्रत्यभात्। क्षणोत्तरं च सुवर्णपुरेतिहासमाख्यातुमुपाक्रमतातिगम्भीरया गिरा — "अहो, सुवर्णनगरी बभूवैकदा निरानन्दा मरुस्थलीव यावन्न पवित्रीकृतासीत्केनापि दिव्यशक्तिना सिद्धात्मना। सततमुदासीनानामपि प्रतनुप्रभावाणां सान्निध्यात् तपस्विनां दुःसहं दुःखमपनीयते, किमुतेदृशानां सन्तोषामृततृप्तानां सिद्धिमार्गोपदिष्टॄणां महात्मनाम्। विपद्ग्रस्तामबलामस्मत्सद्दात्मानं निर्मातुं धरातलमागतः साक्षाद्विष्णुरिव स पुण्यात्मा।" इत्युक्त्वा क्षणार्धं स व्यरमत्साकल्येन स्ववृत्तान्तं मच्चेतसि दृढं निवेशयितुमिव। ततोऽभ्यधात्पुनः। "दिव्यपुरुषोऽयं नूनं सत्याय धर्माय च स्वप्राणानुपाहरत्। मद्वचसि श्रद्धधासि चेन्मामनुव्रज, अहं सुवर्णनगरीं दिव्यकन्दरं च नयेयं त्वाम्।" इति साग्रहं निर्दिष्टवति तस्मिन् सद्यः समुत्थाय तमेवं मरुप्रदेशं प्रत्यन्वसरम्। देशं तं सम्प्राप्य, किञ्चित्पर्यटनं च कृत्वा पश्चिमोत्तरदिशि शुष्कविजनवनस्पतिविविधहितस्य पर्वतस्याधो विशालां नगरीमेकामद्राक्षम्। तन्मन्दिराणां सुवर्णशिखराण्यस्तप्रदोषे देदीप्यमानानि दूरात्सन्तप्तचामीकरमिव चकासिरे।

आवयोः पुरो वर्त्मनोर्द्वयोरेकतरो दीर्घश्वेतरक्तः सुवर्णनगरीमध्यगच्छदन्यश्च विपिनगुल्मा-वृतः प्रति कन्दरम्। मदीयमार्गदर्शकोऽत्र क्षणं प्रतीक्ष्याग्रवर्तिनं विस्तीर्णप्रदेशं निरूपयन् गिरिगह्वरगामिनमध्वानमगृह्णात्। दुग्धधारयेव धवलितो ज्योत्स्नया पन्था दिवाकर-प्रचण्डतापतप्तः शनैः शनैः शैत्यमभजत्। प्रदेशस्यास्य प्रशान्तता न चिरात्प्रवयसो मुखाच्छ्रोष्यमाणेतिहासवैलक्षण्यं प्रागेवासूचयत्स्फुटम्। यथा यथा विशालशाखिसङ्कुलं दुस्तरारण्यमगाहिष्वहि तथा तथा स्वप्नदृष्टस्थलस्य प्रत्यक्षदर्शनेनेव विस्मयादिभावनाभिः काभिरभिभूतोऽहम्। अथानतिदूरं गत्वा कन्दरस्योपगूढं शिखरं गन्धसारसुरभितं समासादितमावाभ्याम्। पुण्यगर्भागारे प्रवेशात्प्राक् पादुके अपनय चेतसश्च सर्वप्राकृत-विचारान् निष्कासयेति दक्षिणकरतर्जन्यङ्गुष्ठाभ्यां कूर्चं परामृशन् गम्भीरस्वरेण मामा-दिशत्तापसः। मयाप्यनुष्ठिता झटिति तदाज्ञा। अथ यावद् गुहायास्तमोमयीं शैवालाच्छा-दितां दृषत्सोपानपङ्क्तिमवारोहाव तावत्तस्याः समाधिसदृश्या निःशब्दतया निष्प्रभत्वेन गाम्भीर्येण च महाविस्मयाकुलोऽभवम्। अहो परःशतवर्षीयकालात्ययेनानवगाढं शाश्वतं च स्यात् पुनर्गर्भागारमेतदित्यतर्कि मया साश्चर्यम्। मदीयमार्गदर्शकस्य पदमनुचरन्महा-परिणाहमणिशिलामयीं पुरुषस्य मूर्तिं शुभाशिषो वितरन्तीमिव सामिप्रकाशितमध्यभागे गुहाया अद्राक्षमहम्। प्रतिमाया अस्या विशालद्रुमकाण्डसदृशं बाहुयुगलप्रकाण्डं तत्पादयोर्निपतितां विपद्गतां शरणार्थिनीं कामपि वनितां परित्रातुमिवोन्नमितमासीत्। प्रतिकृतिमेतामालोक्य जीवनचक्रविमुक्तान्निर्वाणेप्सूननुयायिनः स्वश्रेष्ठमार्गचतुष्टयमु-पदिशतः प्रथितयशसो भगवतो बुद्धस्याजण्टाख्यायां गुहायां स्थिता नैपुण्यातिशयेन घटिता प्रतिमा मत्स्मरणसरणीमारुक्षत्। अशांसन्मे कमपि बालभावमानन्दोल्लासिनी नयने मूर्तेस्तस्या उन्नतमंसयुगलं, सुदीर्घबाहू, दाक्षिण्यगाम्भीर्यबुद्धिमत्ताद्योतकं विशालं ललाटम्, शान्ततया स्नातं च शरीरम्। भ्रूमध्यस्थापिताचलदृष्टिः समाधिस्थितेव परमब्रह्म-विचारवशा ददृशे प्रतिमा। तपःसन्न्यास-स्वार्थत्यागाद्युदात्तभावा भासन्ते स्म स्फुटं प्रतिमामुखे। अथ मूर्तेः पादयोः पुरो निपत्य कृताञ्जलिः साष्टाङ्गप्रणिपातं कुरु परस्तादेतदीयां पावनकथां ते निवेदयिष्य इत्यवोचत स्थविरोऽध्वगः। प्रतिध्वनद्गुहा-वितानाभोगे तस्य स्वरो दीर्घतामुपेतः प्रत्यभाद् वेतालध्वनिरिव भीषणः। तदादेशं निःशब्दमनुसरते पुनश्च समुत्थिताय मे तमोमयं कोणमेकं प्रत्यासन्नमनुयातुं संज्ञां प्रददौ यथाहमत्रैव स्फुटतरं प्रतिमां तां पूज्यतमामालोकयितुम्। कन्दरान्तश्चिरस्थिरच्छायापटले स्थविरस्याप्याकारस्य प्रत्यभादमानुष इव शरीराकारः। तदीयं पाण्डुराननं गम्भीरं च नयनयुगलं मामवर्णनीयमोहावस्थाकुलं विनिन्याते। निरन्तरतपश्चर्यागाढ-सेवन इवाविष्टः प्रवयाः, अकथयदाख्यायिकां च तामद्भुतां यथा—

वतस्थे । नगरीयं विध्वस्तप्राया यावत्तिष्ठति तावदस्मादेव गिरिगह्वरात्कोऽपि दिव्यपुरुषः विदितनगरविपज्जालो दीनदुःखदावदहनोद्विग्नस्तत्परिहारविचक्षणः प्रचण्डग्रीष्मतापे दिवा तमिस्रायां च कृतैर्जपतपोध्यानादिभिर्मन्त्रशक्तिनिष्ठो दीर्घदीर्घं कालमयापयद् दुःखितप्रजायाश्च संरक्षणाय परमात्मानमभ्यर्थयामास । ततः कतिपयमासाभ्यन्तरे वृष्टिमहौघेनादृष्टपूर्वेण प्लाविता नगरी प्रवाहैर्जनानां विस्मयातिशयोद्गारैश्च पर्यपूर्यत ।''

अत्र प्रवयाः क्षणमात्रं वृत्तान्तस्य पौर्वापर्यस्मरणपराधीन इव किञ्चिद् व्यरमत । ततश्च जोषं प्रतिमायाः पादयोरन्तिकनिहिताङ्गारपात्रे धूपगन्धसारखण्डानि जपन् रिमपि युगपत्प्रक्षिप्य मन्दतरस्वरेण निवेदयितुं पुनरुपाक्रमत—

''धराधिपः करणसिंहो गर्वोच्छ्रूनाधरः श्रेष्ठपुरुषस्यास्याद्भुतशक्तिमपूर्वामाकर्ण्य तमेतं स्वप्रासादमलङ्कर्तुं न्यमन्त्रयत । परं शुद्धात्मना तदनुग्रहे नोरीकृते नृपेन्द्रोऽभिमानी तमभिनन्दयितुं स्वयं तदन्तिकमुपेतवान् । अथ व्यतीतेषु बहुषु वत्सरेषु गृहीतमानवाकृतिर्दिव्यपुरुषोऽयं स्वधर्मरक्षणसक्षणःसत्यत्रासमर्थनाय कदाचित्तिरोभविष्यति ध्रुवमिति जनतायां वार्ता प्रथितासीत् । प्रचण्डतपपरांसु स्वरुचिरदेहयष्टिमिन्द्रियसंयमेन क्लेशयमानस्यानवरतप्रजागरेण श्यामयोनाप्प्यैदृष्टपदमी प्योत्तस्य दर्शनामृतेन स्वान्तर्दं सन्तोषयितुं तदन्तिकं बालवृद्धपुरुषवृन्दं परःशतशः प्रतिदिनं समाययौ । यात्रिका नानाविधोपहारानानीय तदीयपादयोः समीपं निदधुः । भ्रमध्याह्नाह्नामध्याह्नं ध्यायतस्तस्य कृष्णसारकृत्तवास्तवक्षोपरि समुपप्लुत्य सर्जुरिका आस्वादयन्, नीलवर्णकपोताश्च शालीतण्डुलकणानुपाभुञ्जत । योगिराडयं शताधिकवर्षदेशीयोऽपि नवयौवनभूषित इव बभौ । अहो प्रभावोऽयं खलु तस्यामरभावस्य । तस्याननस्य देदीप्यमानच्छविं रुचिरताजितमारां शरीराकृतिं तदिन्यप्रभावशंसि विशाललालाटं दर्श दर्शं वृद्धा युवतयश्च क्षणमनिमेषा विस्तृतान्यदेशास्तत्सुस्तत्प्रायस्तं तं चक्रिरे । तास्वासीत्करणसिंहराजस्य दुहिता भारतीनाम्नी कुन्दकुड्मलसुकुमाराङ्गयष्टिः कमललोचना बालार्कप्रेितवकान्तिः पीयूषमधुरवचना विनयशीला च ।'' निशम्यैतत्सविस्मयमपृच्छं ' किं नृपात्मजापि काषायाम्बरधारिणि तापसे बद्धानुरागा संवृत्ते ' ति । वृद्धो मामाश्वासयितुमुदवदत, ''तथैव खलु । परं स्वप्रेम्णः सिद्धिरसाध्येति विजानत्यपि यौवनोपयुक्तभोगाखिलविलासानुत्सृज्य तं पुण्यात्मानं स्वहृदयेश्वरं दृढमाकलयन्ती तस्यैव ध्यानमनवरतमकरोत् सा । निराहारा निरानन्दा च राजकन्येयं क्रमेण हास्यवर्जिता बभूव । तदीयां शरीरयष्टिं प्रतिदिनमधिकाधिककृशां दर्शं दर्शं सन्त्रस्तौ तत्पितरौ सामपूर्वमेव सह केनचिद्राजकुमारेण तस्या विवाहव्यवस्थां निश्चयं कृतवन्तौ । विदित्वैतद् भारती नैराश्यभुजङ्गेन दष्टेव भयविह्वला मृतप्रायाऽवतस्थे । अथो गन्यन्तरामावादुद्वाहस्य पूर्वस्मिन् दिने तपस्विनीयमबला सूर्यास्तमनात्प्रागलक्षिता दौवारिकैर्विचारभारविरुद्धमपि हृदयेश्वरमुपनिशमुः शङ्कातङ्कमपास्य पितुः प्रासादात्पलायनमकरोत् । हेमन्तक्षणिकसन्ध्यासामयिकनीललोहितच्छायाव्याप्ते प्रदोषे सुरभिसुमनःस्रजमादाय हस्ते शनैः शनैः गिरिकन्दराभिमुखमेव कथमप्येकला प्रातिष्ठत । अत्र पर्वतश्रेणीतः पर्वतश्रेणिमरव्या अटवीमधिष्यकातोऽधित्यकामन्तरा नासीत्कोऽपि पन्थाः सरलः । ततश्च श्वासनिरोधादति-

ध्वनेर्बधिरीकृतक्रोशार्धान्तरालवर्तिप्राणिवर्गस्य प्रशान्तप्रदोषेऽस्मिन् । क्रमेण ध्वनिस्त्वादुच्चतरः समजनि । मेषपालकस्यात्मजः शीघ्रमुत्थाय कन्दरायाः सोपानपङ्क्तिं जवेनारोहत् । कम्पमानहृदया तपस्विनी भारती तरलदृष्टिर्व्याधभयाभिभूतेव कुरङ्गी दुःखपारावारे मज्जतीवानन्यगतिका केशकलापमाकर्षन्ती निराशान्धकारे नष्टेव समाक्रोशन्मुक्तकण्ठम् । 'हा हा हतास्मी' ति । विजनस्थलेऽस्मिन्नागमनेनातिक्रान्तविनयं क्षुण्णस्वाभिमानमात्मानं मेने । ततश्च विवर्णवदना स्वेदबिंदुस्नातललाटा च राजपुत्री बाष्पौघनिग्रहे प्रयतमाना करौ सम्पुटीकृत्य भूतलमाविलं चकार नयनजलधारया । तुरङ्गखुरध्वनिः प्रतिक्षणमेधमानो गिरिकन्दरस्याधिकाधिकं नेदीयान् दम्भोलिवज्रोपमतां भेजे । "भगवन्, त्रायस्व मां त्रायस्वे'ति भारती महात्मनः पादारविन्दयोर्निपत्य विततबाहुपल्लवा क्वणद्वन्ततिम्लानपुष्पशिथिलितसुकुमाराङ्गयष्टिः सकरुणमभ्यार्थयत । तत्क्षणं माणवकः कन्दरसोपानमूर्ध्नो 'भूपतिर्भूपतिरि' त्युच्चैराक्रोशन् सन्त्रासविवर्णास्यः सवेगमवरुह्य प्राविशत् गुहाम् । अभिरक्षणाय च गुप्तस्थानमन्विष्यन् 'यदि तत्राभ्यन्तरकोणेऽन्तर्हितौ भविष्याव' इति कम्पमानो राजकन्यामसूचयत् । विधूते शिरसि तया मेषपालयाऽऽपादमस्तकं बहुलान्धकारे परामृशंस्तमोवृतकोणे निरुद्धश्वासो विलीनो यावत्तिष्ठति तावद्भारती करपल्लवौ प्रसभं समपीडयच्चैराग्येण । 'हा हा ध्रुवमेव मे विनाशोऽद्य । ध्रुवमेव पतनम् । ध्रुवमेव च मे पशुमारं मारणम् । आशाङ्कुरप्रफुल्लितहृदया-[समायाताहमत्र सद्यस्तु वराकी मन्दभागा जन्मान्तरदुष्कृतफलभागिनी निराशापिशाचेन ग्रस्तेदानीम्' । इति विभावयन्ती तपस्विनी मुहुर्मुहुर्भगवंस्त्रायस्व मां त्रायस्वेति कातरेण कम्पमानेन च स्वरेण दृढतरबद्धाञ्जलिः कण्ठबाष्पकीलितवाक् कथं कथमप्यवादीत् । तदीयकरुणोद्गारप्रवाहेणेवाश्रुजलप्रवाहेण पर्यपूर्यत गुहा । तदीयकर्णमर्मभेदि दीनप्रार्थनं पुण्यात्मनः श्रुतौ रक्षककरगृहीतस्य शिशोश्चाटुवचनमिव न्यपतन्न तु मायाया विमोहकानुनय इव । "

अत्राध्यापकः क्षणमात्रं व्यरमत् । परमभक्त्या प्रतिभरं विशालाक्षी निरीक्षमाणः स्मारं स्मारं पूर्वसंवृत्तं पुनर्मृदुस्वरेणाख्यातुमुपाक्रमत — "अथोन्मीलितनेत्राब्जः शनैरासनादुत्थाय जीर्णं विततबाहुयुगलं एधमानमहौदार्यो विलक्षविचक्षणः सत्यधर्मरक्षणसक्षणोऽभिरिरक्षिषयेव गतशरीरः कन्यकाया ललाटमध्यमुपाजिघ्रदतिकारुण्यनिर्झरेण च तां क्षालितवान् । महानन्दसुधापूरप्लावितान्तरङ्गायास्तस्याः समुद्भिन्नरोमाञ्चायाः शङ्कासन्दर्भः सपदि विद्रावितस्तस्याश्च विततमस्तकाया निमीलितनयनायाः पुरतश्चादृष्टपूर्वप्रमोदः लुलोके । ततश्च किञ्चिदाश्चर्यरूपान्तराभिभूतेव क्षणं निश्चलाभूत् स्वान्तःप्रेरितेव कथमपि व्यजानात्सा यत्स्वहृदयेश्वरस्य किमप्यवर्णनीयं परिवर्तनं समवर्ततेति । सकातर्यं सकम्पं च यावदुन्नमयति सा शिरस्तावदतिदीनतामयं क्रन्दनं तन्मुखान्निःसरति स्म । अकाण्डे संत्रासरूपान्तरा पावितान्तरात्मा निमीलितलोचनयुगला स्मितविकसिताननना भगवद्ध्याननिमग्नेव समुपजातहर्षेव नतशीर्षा वाजिनां कण्टकङ्कणस्वरमप्यशृण्वतीव समतिष्ठत । न चिराद्विविधाभरणप्रबलचारुचत्वयः सुवर्णपटाम्बरधरो रोषघूर्णितलोचनो धराधिपः करणसिंहः सानुगः कन्दरं सवेगं प्रविश्य 'क्वास्ति निर्लज्जा

सम्भ्रान्ता भ्रष्टाध्वा क्षणं यावत् निश्चला तिष्ठति तावदकस्मादतिभीषणा सकडकडाशब्दं सौदामिनी समदीप्यत । यावच्चास्ते चकिता कम्पमाना सखडखडाशब्दायमानदन्त-ततिस्तावत् सतडतडाशब्दं गुटिकास्थूलैर्धाराबिन्दुभिर्वर्षितुमारब्ध मघवा । किंकर्तव्यता-मूढात्र यावन्निराशयाश्रुपूर्णाक्षी पलायमाना सक्रन्दं ध्यायति तावद्दैवयोगात् कश्चिन्मेष-पालस्य बटुराजानुधूलिधूसरितचरणयुगलः पटच्चीवरार्धाच्छादितशरीरोऽपर्याप्ताशनपाण्डु-वदनो दीर्घदण्डधरकृशकरस्तत्सविधे समाययौ । अयि किमिति रोदिषीति पृष्टा माणवकेन तेन भारती तस्मै स्वमभीष्टं न्यवेदयत् । एहि तावन्मया सहेति तदीयहस्तमादाय दारकस्तां शनैः शनैर्वनमार्गेण गिरिकन्दरमनैषीत् । राजकन्या चातिश्रान्ता स्विन्नाङ्गयष्टि-र्विवर्णवदना दुःखदन्दह्यमानहृदया बटुना सार्धं समहायासं कतिपयघटिकाभिर्गिरिशिखरं प्राप्य गुहां पवित्रां प्रविश्य च पुण्यात्मानं सिद्धपुरुषं गाढध्याननिमग्नमालोकयत् । अथ बद्धाञ्जलिपुटा सकम्पं ससाध्वसं निरुच्छ्वासं च तमुपाययौ मन्दं मन्दं भारती । मेषपालस्य पुत्रस्तमोमयकोणे गह्वरस्यैकस्मिन् पातितोभयजानु समुपविश्य विलक्षणालोकमिमं व्यलोकयत् । संक्षुब्धं मानसमात्मनो निग्रहीतुं यत्नवत्प्रयतमाना राजकन्या चिरादनभिन-न्दितपानभोजना केतकीव पाण्डुरच्छविर्व्रीडाभरमन्थरा ग्रीवां नमयन्ती स्वपादाग्रमेवाव-लोकयन्ती क्षणं तावत्तूष्णीं तस्थौ । ततश्च सिद्धात्मानमभ्यार्थयत 'भगवन्, स्वीक्रियतां क्षुद्रजनोऽयमि' ति । स च तदाकर्ण्य नयनयुगलमीषदुन्मील्य मन्दहासवदनो जोषमास्त । पुनस्तया प्रार्थितो विधूय शिरो निरुत्तर एव स्थितवान् । प्रसीद भगवन् । अङ्गीक्रियतां तव किङ्करीयम्, निरस्ता पुण्यपादाभ्यां चेद्विनङ्क्ष्यति सा खलु । भगवत्पाद-पंकजयोः समर्पयतु सा जीवनमात्मीयमिति प्रह्वं पुनःपुनरभ्यर्थ्य जीवनाख्यानमात्मनः शुद्धात्मनस्तस्य श्रुतिद्वन्द्वस्यातिथीकृतवती । तद्यथा । 'अहो भगवतः प्रथमदर्श-नात्प्रभृत्येव भगवति बद्धादरा समभवम् । ततश्च भगवतो दिव्यप्रभावचमत्कारपरम्परया कुसुमशरशरजातविद्धचित्ता मनसिजावेशजनितानवरताभिलाषा सलज्जं कथमपि कतिपय-मासान् प्राणानधारयम् । प्रतिनक्तं स्वप्ने भगवत्पुण्यदर्शनब्रह्मानन्दं विन्दन्ती जाग्रती च भगवच्चित्रं मानसभित्तिकायामालिखन्ती कथमपि जीवनयात्रामयापयम् । नैराश्याच्च दिने दिने कृशीभूतां मां वीक्ष्य पितृचरणैः केनापि राजपुत्रेण सह मम विवाहे निश्चिते सति मर्मण्यभिहतेवोत्कीलितप्राणेव च समभवम् । पर्यन्ते गत्यन्तरमपश्यन्त्यनभीष्टोद्वाहादा-त्मानमभिरक्षितुं पितुर्गेहान्निःसृतं पलायमाना भगवतश्चरणाब्जयोः समीपमागतवती परमनुगृह्यदस्मात्परिरक्षेद्भगवानि' ति । एवं विलपन्त्या तयोपयाचितो भूपतेः कन्यया सिद्धात्मा प्रत्युवाच मृदुगिरा । 'वत्से, विरक्तः प्रपञ्चसुखोपभोगाच्च विमुक्तोऽस्मि खलु । अतोऽन्विष्यतामन्यः कोऽप्यनुरूपस्तरुण' इति । अनेन तस्य वचसा तद्वचनसुधारस-पिपासुभ्यामिव कर्णाभ्यामेकतानताजडीकृताभ्यामिव नयनाभ्यां चित्रार्पितेवाभवद्भारती । किंचिद्व्रीडितेव किंचित्स्तब्धेव किंचित्खिन्नेव किंचित्क्षुब्धेव च सा समतिष्ठत । सस्वान पुण्यात्मनस्तस्य पार्श्वे तमोमयकोणे निलीनस्य माणवकस्य शुश्रावमानुपूर्वीव । अथ यावद्भारती क्षणं स्तिमिता तिष्ठति तावदथाति दूरात्सघटघटं प्रतिध्वनिर्घोटकखुराघात-

ध्वनेर्वधिरीकृतकोशार्धान्तरालवर्तिप्राणिवर्गस्य प्रशान्तप्रदेशेऽस्मिन् । क्रमेण ध्वनिरुच्चादुच्चतरः समजनि । मेषपालकस्यात्मजः शीघ्रमुत्थाय कन्दरायाः सोपानपङ्क्तिं जवेनारोहत । कम्पमानहृदया तपस्विनी भारती तरलदृष्टिर्व्याधभयाभिभूतेव कुरङ्गी दुःखपारावारे मज्जन्तीवानन्यगतिका केशाकर्षणमाकर्षन्ती निराशान्धकारे नष्टेव समाक्रोशन्मुक्तकण्ठम्। 'हा हा हतास्मी' ति। विजनस्थलेऽस्मिन्नागमनेनातिक्रान्तविनयं क्षुण्णस्वाभिमानमात्मानं मेने। ततश्च विवर्णवदना स्वेदबिन्दुस्नातललाटा राजपुत्री वार्ष्णेयनिग्रहे प्रयतमाना करौ सम्पुटीकृत्य भूतलमार्द्रितं चकार नयनजलधारया। तुरङ्गखुरध्वनिः प्रतिक्षणमेधमानो गिरिकन्दरस्याधिकाधिकं नेदीयान् दम्भोलिघर्षणगतां भेजे। "भगवन्, त्रायस्व मां त्रायस्वे'ति भारती महात्मनः पादारविन्दयोर्निपत्य विततबाहुपल्लवा म्लानतातिम्लानपुष्पशिथिलितसुकुमाराङ्गयष्टिः सकरुणमभ्यार्थयत। तत्क्षणं माणवकः कन्दरसोपानमूर्ध्नो 'भूपतिर्भूपतिरि' त्युच्चैराक्रोशन् सन्त्रासनिर्वर्णास्यः सवेगमधस्तात् प्राविशद् गुहाम्। अभिरक्षणाय च गुप्तस्थानमन्विष्यन् 'एहि तत्राभ्यन्तरकोणेऽन्तर्हितौ भविष्याव' इति कम्पमानो राजकन्यामसूचयत्। विधृते शिरसि तया वेपमानमाऽऽपादमस्तकं बहुलान्धकारे परामृष्टस्तमोघृतकोणे निरस्तप्राणो विलीनो यावत्तिष्ठति तावद्भारती करपल्लवौ प्रसभं समपीडयच्चिराश्येन। 'हा हा ध्रुवमेव मे विनाशोऽद्य। ध्रुवमेव पतनम्। ध्रुवमेव च मे पशुमारं मारणम्। आशाङ्कुरप्रफुल्लितहृदया समापातोऽहमत्र सद्यस्तु वराकी मन्दभागा जन्मान्तरदुष्कृतफलभागिनी निराशापिशाचेन ग्रस्तेदानीम्'। इति विभावयन्ती तपस्विनी मुहुर्मुहुर्भगवंस्त्रायस्व मां त्रायस्वेति कातरेण कम्पमानेन च स्वरेण दृढतरबद्धाञ्जलिः कण्ठव्याप्तकीलितवाक् कथं कथमप्यवादीत्। तदीयकरुणोद्गारप्रवाहेणेवाश्रुजलप्रवाहेण पर्यपूर्यत गुहा। तदीयकर्णमर्मभेदि दीनप्रार्थनं पुण्यात्मनः श्रुतौ रक्षककरगृहीतस्य शिशोश्चाटुवचनमिव न्यपतच्च तु वामाया विमोहकालुनय इव।"

अध्यापकः क्षणमात्रं व्यरमत्। परममक्त्या प्रतिमां विशालां निरीक्षमाणः स्मारं स्मारं पूर्वसंवृत्तं पुनर्मृदुस्वरेणाख्यातुमुपाक्रमत — "अर्धोन्मीलितनेत्राब्जः शनैरासनादुत्थाय जीर्णं विततबाहुयुगलं एधमानमहौदार्यो विलक्षणविचक्षणः सत्यधर्मरक्षणप्रवणोऽभिरिरक्षिषयेव नतशरीरः कन्यकाया ललाटमध्यमुपाजिघ्रदनिवार्यानिर्झरेण च तां क्षालितवान्। महानन्दसुधापूरप्लावितान्तरङ्गायास्तस्याः ससमुदञ्चितरोमाञ्चायाः शङ्काकर्दमः सपदि विद्रावितस्तस्याश्च विततमस्तकाया निमीलितनयनायाः पुरतश्चादृष्टपूर्वप्रमोदः समुल्लोके। ततश्च किञ्चिद्दारुणरूपान्तरामिभूतेव क्षणं निश्चलाभूत् स्वान्तश्चेरितेव कथमपि व्यजानात्सा यत्स्वहृदयेश्वरस्य किमप्यवर्णनीयं परिवर्तनं समवर्ततेति। सकातर्यं सकम्पं च यावदुन्नमयति सा शिरस्तावदतिदीनतामयं क्रन्दनं तन्मुखान्निःसरति स्म। अकाण्डे संत्रासरूपान्तरा पावितान्तरात्मा निमीलितलोचनयुगला स्मितविकस्मितानना भगवद्ध्याननिमग्नेव समुपजातहर्षेव नतशीर्षा वाजिनां कण्टकक्षणत्कारमप्यशृण्वतीव समतिष्ठत। न चिराद्विविधाभरणप्रबलचारुचयः सुवर्णपटाम्बरधरो रोषघूर्णितलोचनो धराधिपः करणसिंहः सानुगः कन्दरं सवेगं प्रविश्य 'क्वास्ति निर्लज्जा

कुलकलङ्किनी 'ति सगात्रविक्षेपं चुक्रोश कोपहलाहलवक्रीभूतास्यः । ततः पुरः समुपसृत्य तारस्वरेण पुनः सञ्जगर्ज 'क्वास्ति दूषको दुरात्मे' ति । भारती यावच्छिन्नावन्मौनमालम्ब्य तिष्ठति तावन्नृपतौ रोषपावकातिरेकेण ज्वलन् बाहुमात्मनः स्फुरद्धातुकासिधरमुन्नमयन् क्व क्व भारतीत्युदीर्योच्चैस्तां प्रत्यधावत्सरभसम् । अत्रान्तरे च तत्क्षणं कश्चिद् ध्वनिः सहसा । 'प्रतीक्षस्व, प्रतीक्षस्व । पश्य पश्य पुर' इति । उदीरितमात्रे वचनेऽस्मिन् कन्दरगर्भतः क्षणिकदीप्तिघनान्धकारेऽत्र यावद् देदीप्यते तावत्काचिन्मणिशिलामयप्रतिमा भूपतेर्दृष्टिगोचरा भवति, पुण्यात्मा दिव्यपुरुषस्तिरोभूय तत्स्थाने विशालाऽचेतनापि परमसुखदायिनी कृत्रिमाकृतिर्ददृशे । योगसमाधिनिमग्नस्येव ध्यानपावितस्येव सत्याधिपत्यानिर्निरुध्यमानप्रभावस्येव सिद्धात्मनः केनापि सद्यः प्रतिकृतिरियं निपुणमालिखितास्ति । तमालोक्यलौकिकमालोकमालोकं करणसिंहस्तेनादृष्टपूर्वचमत्कारेण चकितचकितो विस्फारितलोचनः सरोमोद्गमः क्षणं मूलग्न इव समतिष्ठत । तस्योज्ज्वलक्रोधाग्निज्वाला झटिति निर्वापिताभूत्तावत्कुतूहलाङ्गाररोषमन्दार्चिरेवावशिष्टाऽऽसीत् । तदाननिर्घृणरूपलेखा क्षणान्मृदुतामापेदे । प्रतिमायाः पुरः सम्पुटीकृतकरां जानुनतोपविष्टां बकुलपुष्पकोमलाङ्गयष्टिं स्वात्मजां साश्चर्यं निरीक्षमाणो महीपतिः क्षणं जोषं स्थितवान् । ततः पुनः परिवृत्य स्वानुजान् सम्बोध्योदगिरद् "धन्येयं किल मे नन्दिनी परमात्मनः प्रतिमायाः पुरो ध्यायतां भक्तानामग्रिमभूता पाविता च स्वनिष्ठया । जन्मान्तरे कृतावदातकर्मा दिव्यात्मनोऽनुग्रहभाजनभूतेह जन्मनि खलु ।"

अत्र प्रवयाः कथको मन्दीभूतस्वरः स्मृतिनिष्प्रभोदरे सुचिरावस्थितपुरातनधूलिधूसरपौर्वापर्यसंवृत्तजातसंस्कारोद्बोधपराधीन इव कथानकनिवेदनाद् व्यरमत । तात्पर्यप्रदीपस्यैधमानान्धकारस्य पारं निरूपयन्निव क्षणं तूष्णीं स्थितवान् । ततश्च चिरान्मृतो स्वहृदयस्पर्शी सन्निपातं चिन्तयन्निव मन्दं मन्दं निःशब्दं च समुत्थाय प्रतिमां प्रति समुपेत्य तत्पुरः साष्टाङ्गनमस्कृति समश्रयं न्यपतत् ।

* * *

अथ जागरितोऽहम् । उन्मीलितनयनोऽभितो दृष्टिं क्षिपन् विजनपर्वतसमीपवर्तिनो गृहस्य कस्यचिच्छयनागारे शिविरोचितखट्वामधिशयानमात्मानमपश्यम् । कश्चित्स्थविरभिषक् मदीयनाडीं परीक्षमाणो मदन्तिके नतशरीरस्तस्थौ । अहं तु मासद्वयात्प्राक् शयनं परित्यक्तुं सैन्यदलं च पुनः संगन्तुं नाशकम् ।



॥ श्रीगणेशाय नमः ॥

# १. नजमदिलेलः

कश्मीरालङ्कारभूतां रत्नखचितमेखलामिव भुवो, मरकतोपत्यकेति रसिकैरन्वर्थं वर्णितरमणीयतां सुवर्णमयीं श्रीनगरीमध्यवसं सोदरद्वितीयोऽहमेकदा मित्रस्यावयोः कासिमनाम्नो नौकागृहम् । अथैकदा निखिलजगत्प्रसिद्धवहीरकस्वामिनं कंचिद्रवदेशीयमहानुभावमधिकृत्य विलक्षणं कथानकमेकं कथयामास । श्रीनगरस्य गग्रिबलास्योद्देशस्य विविक्तकोणे एकस्मिन्संस्थापित आसीदयं महाविलासपूर्णो नौकालयः । अथास्यां शारदशर्वर्यां शर्वरीसार्वभौमकिरणसमुल्लसितायां मोगलविशेषोपस्कारोपपादितस्वादुभोजनोत्तरं काफीति पानीयविशेषं पातुं नौकाग्रं समारुह्य मञ्चिकासु सुखमुपविष्टास्त्रयो वयम् । कालाद्बहुतिथात् प्राक् पाठशालायामभीक्ष्णं कांश्चिद्दुर्मोहमन्त्रमोहितान्स्वेच्छानुकूलमचीकरत्कासिमः । एकदानुपस्थितमपि कञ्चिन्माणवकमात्मने पत्रमलेखयत्सः । अयं यदुः कासिमवद्वेडिनि विदितमासीत्सर्वेषामतो भृशं विस्मयं प्रापुः सर्वे । परवशीकरणस्वाभीष्टसाधन आत्मनः प्रभावस्य प्रत्ययं स्वसहचराणां चित्तेषु दृढं स्थापितवान् कासिमः । वादविवादप्रियोऽयं सिद्धान्तमप्यप्रमाणीकृत्य बहुधाऽखण्डेऽस्मात् पर्यन्ते व्यरमापयत् । तथापि कथानिवेदनक्रमे श्रोतृन्सन्देहसम्भ्रान्तानालोकयन् मोमुद्यते स्म सः । आङ्ग्लदेशे कस्याञ्चित्पाठशालायामावयोः सह कासिमेन परिचयोऽभूत् । आध्यात्मिकपारलौकिकाद्यालापकल्पनासु विप्रलम्भभूमिरभावयोः । विविधभावनामयचित्तोऽयं क्वचिदतिमुखरः क्वचित्सन्निर्बन्धे मौनी स्थितवान् । विचित्रप्रकृतेर्विचक्षणस्यास्येतरकुमारेभ्यो वैशिष्ट्यं किमप्यासीत् । बाल्यात्प्रभृति महार्हरत्नमन्तरेण विमोहोऽस्य क्रमेण समेधमानोऽलौकिकोऽभूद्यौवने । यत्र यत्र च पर्यटत्तत्र तत्र रत्नसञ्चयमकार्षीत् सः । दिष्ट्या समृद्धकुलोद्भवस्यास्य वित्तस्य गणना नासीत् ।

अथापि विभावर्याः सौन्दर्यातिशयविमोहिताः परःशतपुण्डरीकपरिलसितं दलाल्यसरोवरं हिमाच्छादितहिमांशुचुम्बिहिमाचलशिखराणि च निरीक्षमाणा ग्रीष्मे सुखावहानां वातानां स्पर्शसुखमनुभवन्तः पयःफेनस्निग्धतरया ज्योत्स्नया द्विगुणितोत्साहाः प्रस्फुरच्चन्द्रकल्लोलकम्पितप्रमद्भ्रमरझङ्कारस्वरं शृण्वन्तश्च वयं कञ्चित्समयं सुखमयापयाम । अत्रान्तरे सुवर्णमयं तमाखुपात्रं कासिमः समुद्दीप्य सगडगडाशब्दं तमाखुधूमं मुखान्मेघमालामिवोदगिरत् । क्वचित्क्वचिन्ममानुजेनापि तस्मात्तमाखुपात्राद्धूमपानसुखं निरवेशि । मया तु तमाखुभोगानभिज्ञेनैव भाव्यम् । परतः पुरातनाचारामूल्यरत्नमन्त्रितकवचपिशाचविमोहनविद्यादिविषयजातमधिकृत्य संलापमकुर्म वयम् । समयेऽस्मिन् कासिमोऽत्युल्लसितचित्तः पुरोनिहिताक्षोटहस्तफलकमवलम्ब्य चञ्चच्चन्द्रचमत्कारेण द्विगुणितोन्माद इव वक्तुमारभत ।

'अहो ! अत्यल्पो जनोऽद्य विश्वसिति खलु विमोहनविद्यायाम् । परमतिविलक्षणोऽनुभवो मया प्राप्तः किलैकदा' इति जगाद कासिमः प्रोच्चैरसकृत् प्रहसन् । तदीयो विलक्षणहासः कुतूहलमावयोः सपदि समुपादयत् ।

'न विद्यते जगति विमोहनविद्या कापि । क्वचिद् भावनायाः क्वचित्संत्रासादपि संभ्रान्तान् मूढमतीन् विमोहनविद्याकोविदमात्मानं मन्यमानश्छाद्मिको विमोहयति' इति प्रत्यवादीन्ममानुजः सनिर्बन्धं वादविवादप्रोत्साहित इव ।

'तथापि कश्चिदूर्जस्विनं सुघटितशरीरं पुरुषं मदिच्छावशीभूतमिवालोकितवानहमेकदा' इत्युक्त्वा सहसा व्यरमत्कासिमः ।

'अपि त्वया वस्तुतः साक्षीकृतश्चित्तविकारोऽस्य' इत्यविश्वासशंसिस्वरेणापृच्छम् ।

कासिमस्तु प्रत्युत्तरमदत्त्वा समाधिस्थित इव क्षणं तूष्णीमास्त । तदीयतमाखुपात्रान्तर्गतमुदकमनवरतं सगडगडाशब्दमकार्षीत् । कासिमो विदूरस्थहिमावृतहरिपर्वतोपरि बद्धदृष्टिर्धूमपटलाच्छादिताननः सविचारः स्थितवान् ।

'अपि त्वया विमोहनविद्यामोहितो जनोऽयं प्रत्यक्षीकृतः' इति पुनरनुयुक्तो मया कासिमोऽवदत् ।

'अथ किम् । वस्तुतः साक्षीकृतो मया पुरुषस्यैकस्य विमोहविकारः' इति किञ्चित्स्खलितवाचा स्वप्नादुद्बोधित इव न्यगदत्कासिमः । ततश्च कञ्चुककोशे हस्तवस्त्रमादातुं हस्तं न्यवेशयत् सः । विलक्षणकथाख्यानस्य प्रस्तावनासूचकमस्य चेष्टितमिदमित्यजानीव खलु ।

'मदीयकथामाकर्ण्य किं वक्ष्यते युवाभ्यामिति पूर्वमेव वेद्मि' इति सगूढार्थमब्रवीत्कासिमः ।

'किमुद्दिश्यास्ति ते निवेदनम्' इति पृष्टवानहम् । कासिमस्तु सधूमं तमाखुपात्रं सवेगमाध्मातुमुपाक्रमत ।

'निवेदिता कथा नोचेत्तव सिद्धान्ते न मनागपि विश्वसिष्यावः' इति ममानुजेनाभियुक्त इव कासिमः पुनः साशङ्कमिवाब्रवीत् ।

'कथावसाने किं वक्ष्यथो युवामिति विदितमेव मे । परमनुभवस्त्वयमपूर्वः खलु । अन्यः कोऽपि जनो व्यवहारज्ञोऽपि धीरोऽपि तादृशानुभवेन मुहूर्तमात्रमपि सन्त्रासितोऽभविष्यत्' इत्युदीर्य रजनीकरकरनिकरेण देदीप्यमानानि हीरकखण्डानीव दलाख्यसरसो जलानि निपुणं निरीक्षमाणः कथां कथयितुमारब्धवान् ।

'अतिरमणीयरजन्यामस्यां नन्दनवनसदृशे स्थलेऽस्मिन् विचित्रकथाख्यानं नानुरूपं किल । सुराङ्गनानामितिहासाख्यानं शोभेत तावत् । कथानकमिदं कुमारक्रीडामण्डलस्य श्रवणानुरूपं खलु । तथापि युवयोः कुतूहलपूर्त्यै कथयिष्य एव ।

'श्रुतो भवद्भ्यां मजमदिलेहनाम्नो प्रथितकीर्तेर्नवनगरमित्यन्वर्थनाम्नोऽद्भुतवीरकस्य सौन्दर्यातिशयः । अथ यम्मरद्वाकान्नाङ् सिरियाबाबिलोनफारसीस्थानचीनादिदेशेषु कृतपर्यटनेन सोढमर्षामात्यादितवता मया हीरकमुकुटमिदमालोकि ।'

अथाख्यानकोऽकाण्डे विरम्य लघुफलकस्थं ताम्बूलचर्वणनिष्ठं हस्तपल्लवेनामार्क्षीत् । ततश्च विदूरोद्देशबद्धदृष्टिर्गाढचिन्तनमग्नमानस इव क्षणं तूष्णीमस्थात् । ' अथैष किं चिन्त-यति कच्चिदभिज्ञातं चीनदेशीयं मन्दारिन इति तद्देशीयत्वेऽपदिशामि ' व्याकुलितं मया । प्रादुर्जना हि चीनदेशीयस्य तस्य महानुभावस्य महार्हमरकतविद्रुमाणि हरि-तवर्णानि रत्नानि कस्मिन्नेन तस्माद्विलोकनविधिना मोहितादात्मसात्कृतान्यासन्निति । अतः कुतूहलपरवशो रत्नविषयस्थीनाभिज्ञातस्य वार्तां श्रोतुकामः सानुनयं औत्सुक्यमागद-स्थितोऽहम् । क्षणोत्तरं आख्यानकोऽपि निवेदयितुमुपाक्रमत ।

“ अथ त्रिवर्षेभ्योऽनन्तरं मोहमयीं प्रत्यागतेन मया निवृत्तमुखात् सकलभुवन-विख्यातस्य नजमद्दिलेलनाम्नो हीरकस्य वृत्तं समाकर्णि । अनिश्चितस्य वर्णनं श्रावं श्रावं मज्जातकुतूहलोऽहं तन्मूल्यनाशि हस्तगतं कृतवतोऽरबदेशीयस्य शेखमहानुभावस्य निवासं मां प्रापयेति निवृत्तमभ्यार्थये । परं कलकत्तानगरं तस्यां रात्रौ प्रत्यागमिष्यन्तोऽसौ मुस्लमानस्तस्यो ममाभ्यर्थनां सफलीकर्तुं नापारयत् । तथापि तेन शेखमहोदयस्य धामस्थाने निर्दिष्टे स्वयमेव तत्सन्दर्शनाय तस्मिन्नेव दिने गतवानहम् । अरबदेशीयोऽयनमुस्लमानाभिधेनः पयोधेस्तटे मोहमय्युपकण्ठे मर्लीनामोद्देशे विविक्तं किञ्चिद्विशालमपि सुन्दरं मन्दिर-मध्युवास । तस्मिन्वासरे नागपञ्चमीमहोत्सवनिमित्तेन शेखमहोदयस्याऽऽलयस्य पृष्ठभागे समुद्रोपकण्ठस्थे महाजनसमूहः क्षीरसंभृतपात्रहस्तो नागस्तनपानविषये समभीमिलत् । श्रीतुरवाद्यानां प्रमुदितानां कलकलध्वनिना प्रचण्डनादिताशं निकषामयं जलधेस्तटम् । पन्नगोभुजगादीनां निनादः कर्णयोऽन्तरतमप्यगाति । अत्रान्तरे महीसुरगो मन्त्रस्तवन-मपठत् । अथ प्रासादस्य प्रवेशमहाद्वारे प्रविष्टे गृहस्वामिनं निजाऽधिनिर्देशेन सेवकेनानुगम्यमानं नानासुगन्धकुसुमसुरभितपुष्पवाटिकायां गतागतं कुर्वन्तमद्राक्षम् । अभूत्सबलगात्र उन्नतांसो दीर्घबाहुः सान्द्रश्मश्रुदीक्षितमूर्धनिविशालललाटोदारमति-मत्त्वतो महानुभावोऽयम् । ”

अथ आख्यानकमाख्यातुं निर्वाणितं पुनरुद्दीपयितुं क्षणं व्यरमत् । ततश्च धूमपटलं मुखाद्बहिर्नयनयुगलं च मुहूर्तं निमील्य भूयो वक्तुमुपाक्रमत ।

“ शेखमहोदयस्तु स्वदेशाचारानुरूपेण परमातिथ्येन चिरपरिचितमिव मां भूरि संभाव्य मधुरैर्वाक्यैः प्रमुदितान्तःकरणमिवात्मानं प्रादर्शयत् । मन्निवृत्तस्य मुखेन ममाभिप्रायं सम्यक् तद्वृत्तं विदितमासीत्तस्येति स्फुटमभूत् । कुशलप्रश्नादिकं कृत्वा-ऽनुचरमुपानयमतिरम्यं पुष्पकुञ्जं प्रति मां महानसौ प्रानयत् । तदायत्तेवको कोकन-देष्विव नितरां गोपीचन्दनैः शोभमानमूर्तिः स्वामिनो निकटेऽन्वगात् ।

“ अथ गृहस्वामिना सह चलतो मे पादः समुज्ज्वलमेकं दुग्धपूरितं पित्तलपात्रं मार्गावृक्षयष्टिकस्य प्राचीनस्य समीपे निहितमस्पृशत् । किमेतदिति हसायाचनार्तमति-कर्तव्यविमूढः पृष्टो मया प्रत्युवाच गृहपतिः । ‘ नागपञ्चमीमहोत्सवनिमित्तेनोपहारीकृतमे-तद्दुग्धपात्रमाराधनेन । महत्यस्मिन्दिने अस्मिन्नपि शिवरात्रौ प्रायेण हिन्दुजनो नागान्

गृहरक्षकान्मन्यमानः क्षीरोपहारेण प्रसादयतो'ति शान्तवृत्तिना शेखमहोदयेन गम्भीरस्वरेण निर्देशितम्। पुरातनाचारे बद्धादरोऽप्यहं किञ्चित्सम्भ्रान्त इवास्मि। अथासनमधिष्ठिते मयि मन्दं मन्दमान्दोल्यमानासु व्रततिषु संवादमावयोः शुश्रूषुरिव मौनभाजमुपयत्सु पतगकुलेषु जातिपुष्पनिकायसहर्षप्रकाशमुखरेषु द्विरेफेषु दक्षिणकरपल्लवेन श्मश्रुं परामृशन् साभ्रेडं सोत्साहञ्च 'अपि भवद्भिर्महार्घमणीनां सम्प्रति नूतनगवेषणमकारी'ति मृदुवचसोर्दुमापया गृहपतिर्मामपृच्छत्। इत्यनुयुक्तो मत्कोशगतं हरिन्मणिजालं तस्मै सगौरवं प्रादर्शयम्। स च रत्ननिकरमिमं सूक्ष्मं निरीक्ष्य तद्गुणाभिज्ञो मां नितरामभ्यनन्दत्। न चिराद्वातिथ्यनियममाचारमनुसरन् शिराजदेशोत्पादितं स्वादु शर्बतं नाम पेयविशेषं समानीय आवाभ्यां सेवकः कुञ्जस्यैकस्मिन्कोणे च मां ससंशयं निरीक्षमाणो जोषं स्थितवान्। 'अपि श्रीमच्छिराजोक्ति विडम्बितनक्षत्रपतिप्रभोऽन्वर्थनामा मदीयहीररत्नमणिर्जमदिलेव्हाभिधेयः' इत्यनुयुक्तवान्मां गृहस्वामी मयि च कस्मिन्नशिरसि सेवकमारमनस्तमानेतुमिङ्गितेनैव निरदिशत्। कतिपयक्षणोत्तरं क्षौरेयमञ्जूषाकरः सेवकः पुष्पकुञ्जं परावृत्य स्वामिनः पुरस्तात्तां निधाय क्षणं तत्रैव विलम्ब्यानिच्छयेव ततोऽपासरत्। पेटिकामेनामुद्घाट्य शेखमहोदयेन शतत्रयमापतोलस्य देदीप्यमानस्य हीररत्नमणेर्दर्शनेन ममाक्षियुगलं साफल्यं नीतम्। स्वप्रभाधर्षितसकलजगन्मणिजातः स्वदीप्त्याऽऽकर्षयन्निव निखिला मनांसि सपद्येव मां हीररत्नमूलजोऽयं व्यमोहयत्। अवलोकितमात्रमेवमद्वितीयामूल्योपलं स्वकीयं कर्तुमुत्कण्ठाधीनोऽभवम्। 'एनं क्रेतुमिच्छामि श्रीमतः' इति सादरमाभाषितो मया 'महीपतेर्धनप्राप्त्या अपि नैतं विक्रेष्ये' इति प्रोच्य स तस्यामूल्योपलस्य वृत्तं मे न्यवेदयद्यथा। 'रत्नस्यास्योदारगाथापरम्परया विमोहिता मोगलधराधिपा अकबरजहांगीरादय इत्यनिशमभिलाषिणः प्राहुः किल। मोगलसार्वभौमस्य राज्ञः प्राणनिर्विशेषप्रियायाः सुराङ्गनाजित्वराया नूरजहानाख्यायाः प्रथितलावण्यवरीर्णैः केशकलापं भूषयामासायमि'ति। अथ रत्नमिदं निपुणं निरूपयन्पुरातनमोगलसाम्राज्येतिहासः साकल्येन तस्य देदीप्यमानरश्मिषु प्रतिबिम्बित इवैक्षाकल्पम्। क्षणं च विमोहसागरे निमग्न इव स्थितोऽहम्। शेखमहोदयस्य तु नेत्रे मां ससाङ्कं सरोषं च निरीक्षमाणे आस्ताम्।

" अथ नजमद्दिलेल्हीरकोपलमणेरनवरतचिन्तैकतानमानसोऽहं केनापि सन्धानेन तमात्मसात्कर्तुं निरचिनवम् । चिरं तत्स्वामिनं गाढं व्यचिन्तयम् । जाने किमकरोन्महानुभावोऽयं तदा परं कथमपि गतदिन इवाद्यापि तत्सान्निध्यं व्यमानयम् । रात्रौ च स्वप्ने निजहीरकं मे ससौहार्दमुपनयन्तं तमपश्यम् । यावदुत्थाय तममूल्यं मणिमादातुं प्रसारयामि करद्वयं तावत्तिरोहितोऽभूदरबदेशीयमहाभागोऽयम् । प्रबुद्धश्चाहं भग्नमनोरथोऽपि रत्नमिदं कथमपि दैवयोगान्मद्धस्तगतं भवितेत्यकल्पयम् ।"

अथास्मत्सुहृन्मुहूर्तमत्र विरम्यासनखण्डेऽवस्थाप्य च नौकागृहस्याधस्तलं सपदि कौशेयमञ्जूषाको न्यवर्तत । अथ तावत्तेटिकामुद्घाट्य बृहदाकारमत्युज्ज्वलं हीरकं नौ प्रादर्शयत् । 'किमेतत् ? किमेतत् ? नजमद्दिलेल्हीरकमणिः किम्' इति ससम्भ्रमं साश्चर्यं चाहमपृच्छम् । 'तस्य प्रतिकृतिरेवेयम् । इयं साधु साचिव्याऽनुकृतिस्तस्य हीरकस्ये' ति प्रोच्य निश्चिन्तं च प्रहस्य कासिमस्तद्वृत्तं निवेदयितुमुपाक्रमत यथा—

" निखिलनिशायां च तस्यामुन्निद्रनेत्रेण यापितायां मया शेखमहोदयस्याकाण्डे संवृत्तं निधनमतिशोचनीयं तदीयहीरकस्य च गूढतिरोधानं वृत्तपत्रद्वाराऽवोधि प्रातस्तराम् ।"

'कथं कथम्' इति ममानुजः कासिमस्य शुष्कस्वरेण विस्मितो समुदैरयत् । 'अथ कथं त्वया प्रतिकृतिरियमधिगता' इत्यहमपि सहसाऽपृच्छम् । कासिमेऽथ सविलक्षणहस्तविक्षेपं तूष्णीं स्थिते ममानुजोऽहं च साशङ्कौ सम्भ्रमेण घूर्णितचेतसाविव परस्परमवालोकावहि । क्षणोत्तरं कासिमः पुनरुपन्यस्तुमारब्धवान् ।

" अथ मध्याह्ने शेखमहोदयस्य मृत्युविचारणासमितिस्तत्प्रासादे मेलिष्यतीति विज्ञापितोऽहमधिकारिभिः । तद्भूतनिधनात्प्राक्क्षणेऽहमस्यान्तिकवर्त्यासमित्यधिकारिणो मदीयसाक्ष्यममार्गन् । अतः समाप्तप्रातर्विधिः सत्वरं शेखमहोदयानामालयं समासाद्य मृत्युमीमांसकानां समितिं गुप्तप्रकोष्ठे संमिलितामद्राक्षम् । दिवंगतस्य स्वामिनः संमिलिते परिवारे वृद्धोऽबिसिनीयः सेवको मद्दृष्टिगोचरोऽभूत् । प्रविशति मयि मुखशालां न्यक्षिपदयं सकोपं कटाक्षम् । अथ विचारणाप्रारम्भात्पूर्वं निजपार्श्वस्थे विष्टर इङ्गितेन सभाध्यक्षेण सूचितोऽहं जोषमुपाविशम् । अथ चञ्चललोचनः सेवकः साक्ष्यप्रदानायाज्ञापितः साशङ्कं मामनवरतं निरीक्षमाणो व्यसनं वृत्तं कथयितुं सगद्गदमारब्धवान् ।

" अहो दीनरक्षकाः । परेद्युरासन्ध्योपासनं पूज्यपादानां मदीयस्वामिनाममूल्यप्राणवता शरीरेणालङ्कृतमासीदवनितलम् ।' अत्र क्षणं विरतवचनोऽङ्गुल्या सोदर्यं मामुद्दिश्य पुनरालपितुमुपाक्रमत । " महाशया इमे समीपवर्तिनो मस्जिदस्य पुरोहितस्योपासकान् प्रति संध्योपासनार्थमाह्वानात्प्रागेव स्वामिनः सन्दर्शनाय समायाता मन्दिरमिदं किल । कृतसत्काराः स्वामिभिरमी कुसुमकुञ्जं समानीताः । अहं च नित्यनियमानुसारेण स्वामिनो निकटेऽनुगम्य तयोः पार्श्वे स्थितवान् । न चिरात्तममूल्यहीरकमणिं समानेतुमादिष्टः स्वामिभिः क्षणमात्रमेव तौ व्यसृजम् ।'

" अत्र निरुद्धकण्ठः कञ्चुकप्रान्तकोणेन नेत्रयुग्मं प्रमृज्योष्णं च निःश्वस्य विस्फारितनेत्राभ्यां मामवेक्ष्य समभाषत ।

"'न चिरात्सन्ध्योपासनार्थं प्रार्थनाकौशेयास्तरणं भूतले विरचय्य वाटिकायाः पार्श्वभागे नेदिष्ठे संध्यामुपासितुमपासरम् । समापितसंध्योपासनक्रियो यावत् पुष्पकुञ्जं निवर्तेऽहं हन्त तावत्प्रार्थनास्तरणे गतासुं स्वामिनो विलोकयामि । समुद्घाटितपिधाना हीरकमञ्जूषा रिक्ता तत्पार्श्वे स्थिताऽऽसीदि'ति ।

"इति निवेद्याधिकाधिकमन्दीभूतस्वरो द्विगुणितद्वेषो सभ्रूभङ्गं मां निरूप्य विरतवचनो वातायनात्पुष्पकुञ्जस्य दिशं प्रत्यालोक्य दीर्घं च निःश्वस्य पुनः समुपाविशत् । अत्रान्तरे वाटिकायां विरचिता विष्टराः शोकानुकम्पादर्शनाय समायातानां मित्रज्ञातिबान्धवादीनां कृते तैः क्रमेण समपूर्यन्त । मुख्यशालायाः समीपवर्तिनि प्रकोष्ठे पुरोहितानामुत्तरक्रियामन्त्रान् पठतां शोकस्वरोऽनवरतं समाकर्णि । ततो मुहूर्तं यावत् परितो जनैः संशयोद्गारैः पर्यपूर्यत सभामण्डलं तावन्मां संबोध्य सभाध्यक्षः समभाषत ।

"'शेठमहोदयानामाकस्मिकमृत्युकारणं नाद्य यावद्विदितमस्माकम् । अन्तिमदर्शनं तेषां भवद्भिरुपलब्धमिति भवत्साक्ष्यनिवेदने कुतूहलमस्माकम् । तद्धैर्यमवलम्ब्य कथ्यतां सर्वमेव । भवतामत्रागमनहेतुः । अपि चिरपरिचयाद्वा हीरकदर्शनकुतूहलाद्वा कुत आयाताः । किमुक्तं शेठमहोदयैः । कियन्तं कालमवस्थिता यूयं सदनेऽस्मिन् ह्यः । इत्यादि विशकलय्य निवेद्यताम् ।'

"इत्याज्ञापितः सभाध्यक्षेण परिस्थित्याकुलोऽहं किंचिद्दोलायमानमानसः कतिपयक्षणाज्ञोपमनस्याय शेठाब्दुल्लमहोदयानां प्रथमदर्शनादारभ्यावयोः संलापो हीरकदर्शनमभिनन्दनं निर्गम इत्यादिं वृत्तान्तं सविस्तरं न्यवेदयम् । विरतवचसि मयि मुख्यशाला भयानकनिःशब्दतया मुहूर्तमाक्रान्ताऽभूत् । क्षणेऽस्मिन् संत्राससन्देहमिश्रितचिन्ताभिभूतचेता मनस्यकरवम् । 'प्रायेण शेठमहोदयानां घातुकं मां शङ्कते जनः । मां दण्डपाशावबद्धकरं प्रेक्षिष्यन्त्यधिकारिणः । निरपराधिनमात्मानं कथं नाम समर्थयेय । अव्यापारेषु व्यापार एव व्यधायि मया हीरकदिदृक्षुणा । हीरकलिप्सा मे निखिलदेशस्य सङ्ग्राहकाणां विदितैव । शेठमहानुभावानां मनीषिणामन्तिमदर्शनं मे स्यादिति समाजनस्य संशयलक्ष्यभूत एव मुग्धक इदानीम् ।' इत्थं नानाविधचिन्तासन्तानाक्रान्तो विवर्णवदनः शुष्ककण्ठो वेपमानहृदयो यावदवातिष्ठे तावन्मध्यस्थं द्वारमुद्घाट्य मरणोत्तरदेहपरीक्षाफलमाख्यातुं भिषजौ [illegible] मुख्यशालां प्राविशताम् । सभाध्यक्षस्य पृच्छया प्रेरितोऽब्रवीदेकस्तयोर्यथा । 'घातशस्त्रस्य चिह्नं गलस्योदरस्य वा लक्षणं न संलक्षितमावाभ्याम् । अतो मृत्योः कारणं न किमप्यावाभ्यां निर्देष्टुं शक्यत' इति ।

"'हा ! अल्ला ! अल्ला ! इन्द्रजालस्य कोऽपि दारुणः प्रसारोऽयम्' इति व्यथितोऽतिविनिर्दिष्टः स शेठमहोदयस्य सेवको मां क्रोधकषायितं निरीक्षमाणः प्रोच्चैः समुदैरयत् । तदीयं वचो भुजङ्गफूत्कार इवाप्यन्तः प्रकोष्ठं सर्वैः । सभामण्डले च तावत्कक्षाविधिप्रिया निःशब्दता व्यराजत । अहं तु निष्कारणचिन्ताभारभङ्गयानुगतो विस्मयहृदयो मूकवत्तत्रैव स्थितवान् ।"

इत्युक्त्वा विरतनिर्वेदनो गतवृत्तचिन्तनपरो विलक्षणस्मितास्यः क्षणं तूष्णीकामास्त कासिमः । अर्धसमाप्तां तस्य कथामाकर्ण्यावां चमत्कारिणौ सम्भ्रान्तौ च साकूतं परस्परं व्यलोकयाव । प्रश्नपरम्पराऽऽवयोर्जिह्वाग्र उत्तस्थौ । ततः कासिमेन पुनरप्यस्तुमारब्धे निरुद्धनिश्वासा अशृणुव ।

"अथाचिरात्सभाध्यक्षो मामप्राक्षीत् । 'अपि चिरान्महार्घरत्नसंग्रहे व्यापृता भवन्तः' इति । ·

"'श्रेष्ठमणिसञ्चयनमेव मे जीवनस्य प्रधानव्यवसाय आयौवनारम्भात् । तदर्थं च देशाद्देशं पर्यटनं मम । पितृधनस्य भूयिष्ठांशस्य व्ययश्च । शेख्रावदुल्लमहानुभावकृतेन स्वहीरकस्य भृशं मयाभिलषितस्य क्रयप्रत्याख्यानेन नितरां भग्नमनोरथो निराशाकुल-श्चाभवं ह्यः' ।

"इति प्रत्युक्ते मया पुनर्गाढनिःशब्दतामविरलनिष्कम्पाक्षिरूत्साहितमभूदधिकाधिकं सभामण्डलम् । सभाध्यक्षो भिषग्भ्यामुभाभ्यां कर्णसंलापमकरोत् । अहं च यावन्निः-शब्दतया क्लिश्यमानो जोषमवस्थितस्तावद्भिषजोरेकमपृच्छत्सभाध्यक्षः ।

'अपि केनापि विमोहविद्याप्रयोगेण प्राणानपहर्तुं पार्यत' इति ।

"प्रश्नेनानेन समापत्तेः संत्रासाभिभूतः क्षणं निरुद्धश्वासो नतशिरा निश्चलश्च स्थितवानहम् । पुरातनचीनमन्दारिणस्य मरकतमणीनां च विषयो मत्स्मृतिसरणीं सरभस-मगाहत ।" अत्र पुनर्विरतवचाः कासिमः ।

'विमोहविद्याभियोगाधीनदेशीयमहाजनस्य मरकतमणिप्राप्तये प्राणा अपहृता-स्त्वयेति किंवदन्तीं विचिन्तयसि किम्' इति पृष्टावावां मयेङ्गितमात्रेण पुनः सम्भाषितु-मुपाक्रमत मित्रमावयोः ।

"अनुप्रायाणां केचन जना विगतासवो जाता इति श्रुतमस्ति मयेति भिषजा प्रत्युक्ते पुनरुभाभ्यामगदंकाराभ्यां कर्णालापमकरोदध्यक्षः । चिन्तापरश्चाहं महानर्थगर्ता-निपतनोन्मुखमात्मानमवाबोधम् ।"

'कुतः ? कथम् ?' इति सविक्षेपहस्तेनानुजेन मे समुदीरितम् ।

"यतो नजमदिलेल्हीकेः श्रेनुमिष्ठे शेख्रमहोदयैश्च मदभ्यर्थना प्रत्याख्यातेति प्रतिपद्य दोषपात्रतां नीतवानहमात्मानम् । चीनमन्दारिणस्य च मृतवृत्तं प्रायो विदित-मासीद्भिषजाम् । क्षणेऽस्मिन् पैशाच्या छाययाऽऽवृतमात्मानमकल्पयम् । हीरकस्य रश्मि-जातमालाम्बरेणान्धीकृत इव भ्रान्तमस्तकोऽभवम् । कल्प्यमानायां निःशब्दताकाल-कलायां भिषग्भ्यां सभापतौ संमन्त्र्यमाणे भयसन्देहाक्रान्तो निरुद्धनिश्वासः स्थितवानहम् । तेषां मन्त्रणस्याहमेव विषय इत्यत्र सन्देहलेशोऽपि नासीत् । अथ तावन्मन्दिरस्यान्ततः पुरोहितानां मन्त्रकलमलिकलकलस्य झगज्झणनाद इवाश्रावि । तदेतत् क्वचिद् व्यरमत्क्षणं ततश्च पुनरधिकाधिकोच्चैः समाकर्णि । पर्यन्ते च मन्दरुदितमिवारा-चीयत । किञ्चित्कालोत्तरं सहसा सदनस्य बहिर्भागे कस्यचिद् गुरुपादनिक्षेपः श्रुतिगो-

चरोऽभूत् । ततो विशालं प्रवेशद्वारमुल्लङ्घ्य कश्चित्सुघटितशरीरो ह्रस्वाकृतिर्निर्विकाराननः पुरुषो मुखशालां सहसा प्राविशत् । सोऽयं शेलमहोदयानां मालाकारः सभापतिं शनैः शनैरुपेत्य 'पुष्पवाटिकायामुपलब्धमिदं मये'ति सभागतानां न कमप्येकं विशिष्टमुद्दिश्य समितेः पुरः पट्टलिप्तं वस्तु किञ्चिन्न्यधात् ।

'किमासीद्वस्तु तद्' इत्यधीरमपृच्छम् ।

"अभूविलिप्तवज्रमदिरोल्लहीरक एव । मालाकारेणासौ पुष्पकुञ्जान्नातिदूरनिहित-दुग्धपात्रस्य समीपमुपलब्धः । 'तत्रेदमपि मयाधिगतं तत्रैव' इत्यभिधाय फणिनो निर्मोकस्तेन प्रादर्शि । व्याहरच्च 'जानन्ति किल श्रीमन्तो यत्परेद्युर्नागपञ्चमीमहोत्सवोऽभूदिति । तस्मिंश्च पुष्पवनेऽत्र सर्वतो दुग्धपात्राणि निहितान्यासन् । भुजङ्गहतकश्च कोऽपि पीतदुग्धो घोरचेष्टितोत्तरमात्मनो निर्मोकेन रिक्तभाजनं सनाथीकृतवान्' इति ।

"तद्वचनमाकर्ण्य क्षणं सर्वे सभाजनाश्चित्रलिखिता इव नीरवाः संवृत्ताः । अहं च स्तब्धीभूतश्चक्षुषी स्थिरीकृत्य जोषं स्थितवान् । परितस्तावत्सभामण्डलस्य विस्मयोद्गार-प्रवाहैः पर्यपूर्यत मुखशाला । सभापतिश्च कुतुकपरवशान् सभास्तारान् संबोध्य समभाषत । 'अहो ! सर्वमिदानीं शेलान्दुलमहोदयानां निधनकारणं स्फुटमेवास्ति । न किञ्चिदप्यव-शिष्यते निर्णयविषयस्य । कासिममहाशया अपि संशयारोपान्मुक्ता इत्यभिनन्दनीयाः खलु' इति । वृत्तान्तमुपसंहरन्निव निर्गतमात्मानं मन्यमानः क्षणं विस्मृतात्मेव स्थितवानहम् ।"

अथ निरन्वाक् कासिमो निमीलिताक्षः क्षणं तूष्णीमस्थात् । शेलान्दुलमहोदया-नामाकस्मिकमृत्योर्गूढतानाटिकायामुद्ग्रथितायां कासिमं निपुणं निरूपयन् 'पन्नगस्यास्य गरलेनामुमेण भाव्यमि'ति न्यगदम् ।

कासिमः—अथ किम् । प्रोतुर्जना सदा यतिर्मोक एव कस्यचित् करालनाग-विशेषस्यास्तीति । शेलमहोदयाः संध्योपासनमनुतिष्ठन्तो दष्टा निमिषमात्रेण प्रायो गतासवः स्युः ।

मन्दोदरः—कथं नाम निपुणैस्ताभ्यां गरलविकारो न समलक्ष्यत ?

कासिमः—आः । विचित्रमेतत्खलु । परमतिविस्मयोऽयं प्रसङ्गो यद् गरलेन निरपराधे जने दण्डमार्गे दोषभारः समारोपितः ।

अहम्—*किमभवद्वज्रमदिरोल्लहीरकस्य ?*

कासिमः—शेलमहोदयेभ्यो हीरकस्यास्य मूल्यं यत्प्रदित्सुरासं तस्यार्धेनैव दिष्ट्या तं क्रेतुमपारयम् ।

मन्दोदरः—एवं भोः ! क्वास्ति ते *विमोहनविद्याविद्वत्कथा ?* कथं सिद्धान्तः *प्रमाणीकृतस्त्वयेह ।*

कासिमः—यद्यपो पुरामेवमिति प्राणेन स्पर्शितं मया ।

इति सन्दोहनीतिप्रसङ्गेन प्राप्तयत्न कासिमेन मोहनविद्यासिद्धान्तप्रामाण्यभारः ।



॥ श्रीगणेशाय नमः ॥

# १. विधवोद्वाहसङ्कटम्

आर्यदेशस्य धुलिकापुरे पार्वती नाम सर्वेश्वरनिकेतने दास्यकर्म कुर्वाणा काचिदन-भर्तृका । बाल्योद्वाहनिरोधकराजविधानात् प्रागेव बालामिमां सुवर्णसवर्णाङ्गीं कमललोचनां मृदुलवचनां केनचिद् बालकेन परिणाय्य तत्पितरौ दिवं गतौ । अचिराद्विवाहोत्तरं स बालपतिरपि तावन्वगात् । ततः प्रभृति बालविधवेयं भर्तृबन्धुजनालये किङ्करीव दीनमाना मनस्येवमाहा कथमपि जीवनयात्रामयापयत् । अथ प्रौढवयः प्राप्तायां तस्यां यौवने विसरावहे सुरम्याः कुन्तलपाशाश्च नारकाणीति मन्यमानैर्भर्तृबन्धुजनैर्मुण्डितशीर्षाऽपि नैसर्गिकलावण्यात्तु व्यद्युतत सा । षोडशाब्दा हि सा कमनीयतमा विमला विंशतिवर्ष-देशीया मधुराकृतिर्विरेजे ।

अथ प्रत्यूषादनिशं कूपाज्जलमाहरन्ती वस्त्रनिचयं धावन्ती गोमहिषादीन् रक्षन्ती पाकगृहे प्रयस्यन्ती सा क्षणमपि विश्रान्तिसुखं नोपलेभे । तद्देवरस्यात्मजः पञ्चवर्षीयो निर्व्याजमधुरालापो तस्या एकमेवालम्बनं बभूव । परं शिशुना तेन क्वचित् क्रीडन्ती श्वश्रुर्बान्धवैर्नृशंसमपीड्यत । रात्रौ भोजनं परिवेष्य भाजनानि च प्रक्षाल्यातिश्रान्ताऽन्तः-पुरस्य तमोमयकोणे कन्थाखण्डमास्तीर्य शय्यां मत्कुणमयं भीतभीतमाना भूविष्टरे गोष्ठसं-निधौ परेते शुनेऽदात्तपत्निनी । निशीथे च बहिःस्थोऽलेऽस्य मर्दानगे कोणे ध्वनित-मर्वादी जागरिता चिरमतिक्रमाना निशां नीतवती । सुप्ताऽपि क्वचित् स्वप्ने मृतान् बन्धूनारोदती दृष्ट्वा दृष्ट्वा सहसैव प्राबुध्यत । ततो वायुमूर्च्छितं निकटवर्तिगोष्ठस्थित-गवां वालधिधूनितशब्दं च शृण्वन्त्युन्मिषितनेत्रा निशाशेषमगमयत् । अथवा महानन्दकारकं दैवस्य शिशुं ध्यायं ध्यायं किंचिन्निद्रासुखमलभत सा । प्रभाते च गोपजनस्य हम्भारवेण प्रबोधिता दोहनाय गोष्ठमगमत् ।

अथ गच्छत्सु वर्षेषु सूर्यांशुर्गिरिकन्दरमिव कश्चिद्युवा पार्वत्या हृदयमगाहत । लौकिकानामगोचरमान्तरसौन्दर्यं मृगयन् कश्चित् प्रवासी पार्वतीं कूपसंनिधौ मासाद्दिवा पश्यन् रात्रौ च मनसा विचिन्तयन् मलिने पुरेऽस्मिन् व्यलम्बत । दीर्घिकासंनिधि-स्थितास्वनेकवनितासु विधवापि मनोहर्त्री पार्वत्येव तं चकर्ष । तस्या अपूर्वलावण्यं दर्शं दर्शं विमोहितोऽभूत्सोऽधिकाधिकम् । विधवानां दीनत्वं तु न स व्यजानात् । तथा हि । धुलिकापुरनिवासिनः कृपया अज्ञानधूलिभिरन्धा धर्मोक्तीं नाऽपश्यन् । तस्मात्पार्वत्या मनोवृत्तिरपि जनापवादभयाद् बन्धुभर्त्सनभयाच्च परं संकुचितासीत् । तया सह चिराय परिश्र-मोऽपि प्रवासी तामुद्वोढुं नाशक्नोत् । अन्ते दैववशात्स्वयमेवोपनतमनःफलोऽनुकूलः । एकदा हि कूपाज्जलमुद्धृत्य त्वराद् गृहं निवर्तमानायाः पार्वत्याः पङ्किलायां भूमौ पदमस्खलत् सहसा च सा भूमौ न्यपतत् । जलसंभृतो घटो भंक्त्वा विकीर्णमभवत् । स्खलनेऽद्विजन-मर्मीत् । पश्यन् पापपूर्णनयनां पतितामालोक्यागत्य युवा साहाय्यदानचिकीर्षया वस्त्रविधं मधुरमुक्त्वा सान्त्वनासुदृष्ट्यापश्यत् तत्र नद्याः कूपात् जलं पुनः स्वयमुद्धृत्य तद्गृहमयाचत । आजन्मतः कदापि नाश्रौषीत् तदेदृक् प्रियं वचः । प्रतिरोधमकृत्वा चमत्कृता सा

संपाद्यताम्' । इति प्रार्थितैस्तैर्विप्रैः प्रोक्तम् । 'गम्यतामितो न संपादयिष्यामो विवाह-मिमम् । धर्मलोपो भविष्यति विधवायाः पुनर्विवाहादि'ति । केचिद्भूसुरास्तमुद्वाहार्थिनं प्रतिपन्नवन्तोऽपि तयोर्वर्णभिन्नतां ज्ञात्वा तदर्थनां प्रत्याचख्युः । 'युवां ब्राह्मणावपि सुतरां भिन्नवर्णौ । युवयोः संयोगो वामधर्मः खलु स्यादि'ति । पर्यन्ते लौकिकज्ञानविवर्जितोऽयं प्रणयी विरक्तचेताः सम्भ्रान्तश्च व्यवहारज्ञमुपययौ । 'निजहिन्दुत्वं निगूहयतोर्युवयो-र्विवाहो लेखपत्रेण साध्य' इति निवेदितं तेन । तदपि स्वीकृत्य प्रियां वोढुकामः स त्वरं तत्संनिधौ जगाम । आह च । 'प्रिये क्षणादावयोर्विवाहः संपत्स्यते । केवलं व्यव-हाराधिकृतस्य पुरुषस्य पुरत आवयोर्नामलेखनं कार्यमि'ति । न कदापि वयेदृशो विवाहः श्रुतपूर्वः । तस्मात्संभ्रान्ता सविस्मयमप्राक्षीत्सा वल्लभम् । 'अप्ययमुद्वाहविधिर्विधवानां हृते कल्पितोऽस्ति' । स प्रत्युवाच । 'प्रिये सवर्णयोः संयोगस्य धर्मसिद्ध्यर्थमेव विधि-र्वैदिकैरेव कल्पित' इति । 'कोऽर्थो ननु लेख्योऽस्ये'ति सकम्पमपृच्छत्पार्वती । 'आवयो-र्हिन्दुत्वं निगुह्यमत्र किन्तु नास्ति मनागपि बाधा । न खलु अर्थो भवेत्वानेन । मा बिभीहि प्रिये' इति तां स समाश्वासयत् । किन्तु शुद्धिबहिष्कृतजातजनितज्ञानाकु-लितमतिः पार्वती स्वल्पवाचाऽब्रवीत् । 'विवाहविधिरयं चाण्डैर्लग्नपत्रमिव भाति मे खलु । अनेन जातिबाह्यो भवेत्वे'ति । अचिन्तयच्च सा । 'अहो वंशपरम्परया ज्ञातिरस्मि यद् अहजातिर्हिन्दुर्नियमेव बहिष्कृतोऽवनिष्टेन यावत्त प्रायश्चित्या पुनः शुचिर्न भवेत् । सोढ्वा पयासं मानभङ्गमिपन्नं काले पुनः स्वजातिक्षेपसत्रं भवेयम् । तथापि सह वल्लभेन निवस्तुं पातालमप्यवरोढुं सज्जाऽस्मि' । इति चिन्तासन्तानसन्नाशान्तर्गतेनोत्क्षिप्तेव चिरं वेपथुं स्थिता सा । ततः प्रत्यवादीत् 'प्रियतम ! आवाभ्यामस्मद्वंशैकल्पितरस्कृतामि । मूर्खैस्त्वैरनुचितमेवाचरितं त्वयी'ति । पुनरभाषत पार्वती 'वल्लभ, जानामि यत्प्रायश्चित्तेन पूतो द्विजः स्वजात्या योज्यते । नेवेदृग्वर्णितं बहिष्कृतो भवतीति व्यवहारविचक्षणैः पूर्वजराजादनुदिष्टाः स्मः । अतो बहिष्कारादुद्विभेमि । त्वत्सहचरी भवितुं वह्निज्वाला-मपि प्रविशेयं परं जातिबहिष्काराज्ज्ञयमात्मानं रक्षेयमि'ति ।

तदा चिन्ताव्याप्ताभिहतां प्रेयसीं पुनः पुनः सान्त्वयामास । दीनदीना पार्वती तु वल्लभं सवाष्पं प्रेक्षमाणा शिरश्च कम्पयमाना सगद्गदमगदत् । 'प्राणेश ! प्राणाधिकसुख्याया मम प्रतिकूलोऽस्ति विधिः । व्यवहारेऽस्मिन् संमतिं दातुं नोत्सहे किल । सुहृन्मणे ! क्षम्यतां क्षम्यतां हतभाग्योऽयं जन' इति । ततः पुनः पुनरनुनीता तथा तेन क्षणमात्रं प्रेम्णाक्षितापि भूयः शङ्काविष्टाऽतिष्ठत् पार्वती । ततश्च तेनोपायान्तरं सूचयताऽभ्यर्थितम् । 'प्राणप्रिये ! मया सह निवस । धर्मपत्नीमिव त्वां संभावयिष्यामि । आजीवं त्वामभिर-क्षिष्यामी'ति । तस्यानुनयं निशम्य तस्या मनसि दोलायमाने मुहूर्तं सा चिन्ताकुला ऽवतस्थात् । अथ धर्मभीतेन किञ्चित् समुत्तेजितः पुनरपि वक्तुं दधार सः । 'कान्योन्यप्रेमसत्त्वस्थौ न कोऽप्यावां शास्यति । अत्यन्तविजने ग्रामे निवत्स्यामि । मत्कर्मकरान् विना बन्धुदर्शनं कोऽपि मद्दृष्टिपथं याति ।' इति तेन पुनः पुनः समाश्वासिता सा दीर्घं निश्वस्य मन्दं पुनः शिरः कम्पयमाना दैवोपहतचेष्टेव निश्चला तस्थौ । क्षणोर्ध्वं किञ्चिदनुकम्पायान्त्या

वचः कण्ठ एव व्यलीयत। पर्यन्ते वल्लभास्वमनो निगृह्य मृदुवाचा साऽब्रवीत्। 'आर्योऽ-हमधोगतिं भवतो नेतुं नेच्छामि। मत्कृते स्वार्थो न त्याज्यो भवद्भिरि'ति। तया स्वनिश्चय इत्थं स्फुटं व्यक्तीकृते तरुणोऽयमत्यन्तविषण्णचेता अभवत्।

ततः कुतश्चिद्भोज्यमानीतं तेन। अल्पमेवाहारं कृतवन्तौ तौ। निराशोद्विग्नः स प्रकोष्ठ इतस्ततोऽचलद्युवा। पार्वती च मौनमाश्रित्य तस्थौ चिन्ताकुला। धुलिपल्लिकायां स्वकिङ्करीभावं बन्धुदौर्जन्यमित्यादिसंबद्धविचारतरङ्गैः सङ्कुलमभूत्तस्याश्चेतः। अकथयच्चा-स्तने 'देवरस्य शिशुरेव ममैकमवलम्बनम्। कालेनातिक्रान्तशैशवः स मयि बद्धादरः स्निह्येत्। प्रमाद्य मातृप्रौढ्यया मां प्रति वात्सल्येनाचरिष्यति'। इत्यात्मानं समाश्वास्य 'सर्वमेव तत्कृते सोढव्य' इति दृढनिश्चयं यावत्कृतवती तावत्स्वग्रामं प्रियां नेतुं चरमं प्रयत्नं कृतवानेष महाभागः। सोऽपि प्रयत्नो निष्फलतां गतः। 'क्षम्यतां क्षम्यतामिति बाष्पपूर्णनयना निगद्य पार्वती वल्लभस्य सङ्केतस्थानमप्यपृष्ट्वा ततोऽपासरत्। तां गच्छन्तीं दृष्ट्वा तरुणोऽवदत्। 'तिष्ठ तावत् प्रिये। असांप्रतमेकल्या त्वया गन्तुं धूमयानेनैतावता दीर्घमार्गेण। अहमागमिष्यामि त्वया सह। धुलिकां प्रापय्य त्वामहं गमिष्यामि यथेष्टमि'ति। ततः [illegible] द्वे अभिज्ञानपत्रे अक्रीणात्। आकस्मिकसङ्कट उपयोगार्थं तां साग्रहं ग्राहयामास दशरूप्यकपत्रं च।

परेद्युर्दिवसोऽवसितप्रायः। परिश्रान्ता क्षुधार्ता विमनाश्च धुलिपल्लिकां प्राप पार्वती। देवरस्यालयं प्रतियान्ती मार्गे सा कूपं यदा व्यतिचक्राम तदा काश्चिन्नार्यस्तत्र चिरायमाणाः पार्वतीं प्रवासमलिनाम्बरामालोक्य ग्रामजल्पैर्निर्भर्त्सयमाना तामुच्चैरुपाहसन्। उपेक्ष्य ताः सर्वा मन्दभागिनी नतमुखी प्रतिकूलप्रवाहेन प्लवन्तेव देवरवासं समासदत्। गृहस्य प्राङ्गणं तमसा लिप्तमालोक्य विजनमपराङ्गणं ययौ सा। गोष्ठद्वारे तयाऽपावृते मृगशय्यासु शयानो गोव्रजस्तां साभिज्ञं व्यलोकयत्। स्वैरचारी शुनकश्च योऽन्यदा गृहमायाति स्म सोऽद्य तस्याः करं प्रेम्णा लेढुमुपागमत्। तस्य शीर्षं लालयन्त्या तया सह प्रेम्णा संलापं कर्तुमिच्छन्निव शुनकः उच्चैरभषत्। तयाप्येवं प्रेमसंप्लुते तस्य नयने वीक्ष्यात्मानुकम्पया तस्या हृदयं व्यलीयतेव। 'भक्ष्यं ते दास्यामि तिष्ठ तावदि'ति तद्वचो निशम्य तदनुयायी भक्तिपरः शुनको जोषं स्थितवान्।

तदनु गृहस्य बहिःसोपानमारोहत्पार्वती। महानसे निरीक्ष्या लघुदीपिकया गृहमर्ध-प्रकाशितमासीत्। तत्पादशब्दमाकर्ण्य देवरस्य शिशुर्हर्षनिर्भरमुग्धाननः प्रधावितो गृहाद्बहिः। यावच्च देहलीमतिक्राम्यति तावत्तत्रान्तर्गृहोपस्थितेन कर्कशध्वनिनावरुध्यत। बालकश्चायं शुभ्रांशुसाम्याननः प्रेमाकृतार्दुर्लक्ष्यैः पार्वतीमाह्वयन्देहल्यां स्थितवान्। अथैतं प्रति यावत्सा करौ प्रासारयत् तावत्तस्य माता क्रोधवक्रीकृतानना पुरोऽगात्। 'आर्य-पुत्रस्यर्द्धिनि पुनः पुनरागमनं कृपणसुमस्मद्गृहमि'ति। तदश्लीलापवादेन वज्राहतेव पार्वती संज्ञाशून्याऽभूत्। मृत्युमुखस्येव भीमया वाचनयाऽऽविष्टा क्षणं मूकेव तस्थौ। ततः शनैः पदन्यासमकरोत्। बालकश्च पुनः पुनरम्बामाह्वयत् तां प्रति करौ प्रासारयच्च। यावच्च स्त्रियोर्मध्ये प्रत्युत्तरमिति तावदनुरागानुकम्पया हरिं पदगा प्रोहति।

कङ्कणभाराढ्यो मातुः पाणिस्तु पुरः सर्पन्तं दारकं हठादरुणत् । तस्यास्तारस्वरश्चोच्चैरश्रूयत 'मा गच्छ वालैतस्याः सविधे । अस्पृश्यास्त्येषे' ति । 'कथमस्पृश्या मे मातुली' ति विचिन्तयन्विषण्णस्तस्थौ डिम्भः । तां दीनां दर्श दर्श निराशया रोदितुमारभत च । अथानाप्यभावनोद्विग्ना तपस्विनीयं निष्कासितशुनीव दुःखभारेण सीदन्त्यात्मानं संधारयितुं स्वस्तिककरावृतस्तनी कम्पमाना क्षणं तत्रैव तस्थौ । ततश्च शनैः शनैर्निर्दिष्टसोपानतोऽवरुह्य प्राङ्गणाद्विनिश्चक्राम ।

क गन्तव्यं कश्च साहाय्यं याचितव्य इति निराशाकुलाऽचिन्तयत्सा । 'अत्र भुक्तिकापुरे निवासोऽशक्यप्रायः खलु । वरं मरणं न मर्मच्छिन्दि दुर्वचांस्यज्ञानां दुर्जनानां चाग्रस्थानाम् । आत्मघातश्चिरपरिचितायां वाप्याम्......नहि नहि । नास्ति पातकं घोरतरम् । जन्मांतरकृतात्पातकात्परिणतमीदृशं जीवनमिह । अपि कुर्यां घोरं पातकमथ येन जन्मजन्मान्तरेऽपि दुरवस्थायामेव पतिता भवेयम्? सुदूरे कुत्रापि यास्यामि । पुण्यपुरे क्वापि शरणं लप्स्ये' इति निश्चितवती सा धूमयानस्थानकं प्रति प्रतस्थे ।

कानिचित्पदानि चलितया तया पृष्ठतः कस्यचिच्चरणपातध्वनिः शुश्रुवे । परिवृत्य साऽपश्यत्सहगमनमनसो वल्लभं सत्वरमायान्तम् । निश्चलैव तस्थौ सा । तरुणेन संनिधानमागतेन पृष्टा सा 'कुत्र गम्यते प्रिय इति' सर्वं वृत्तान्तमकथयत्तस्मै । श्रुत्वा तं दुःखदमपि हृष्टोऽभूदनन्यगतिका प्रिया मेऽधुना मया सहायास्यत्येवेति कल्पनया । प्रार्थयत च तां तथा । 'क्षमस्व वल्लभ क्षमस्व । शास्त्रोक्तविवाहविधिं विना त्वया सह वासः पापायैव । तत् कुत्रापि प्रायः पुण्यपत्तने किंचिदनाथगृहं भवेत्तत्रैव शरणार्थिन्युषित्वा जनसेवया जीवनं यापयिष्य' इति । भूयो भूयः प्रार्थयत सः । भूयो भूयः प्रत्याख्यात्सा वज्रनिश्चया । "कालक्रमेणास्मा अनाथाश्रमे निवसन्त्या आलेखमूलं विवाहविधिमन्तरेण मतपरिवर्तनं स्याद्, कदाचिन् वैदिकविधिनाविवाहं संपादयितुं पुरोहिता उद्यता भवेयुर्वेति संकल्प्य तरुणस्तया सह पुण्यपुरं गत्वाऽनाथाश्रमे कस्मिंश्चित् प्रवेशमयापयत्ताम् । 'मयन्याऽविस्मरणीयोऽयं जनः । साहाय्येन प्रयोजनं स्यात्तदा पत्रद्वारा ज्ञापयितव्यश्च' । इत्युक्त्वा खिन्नमनस्कोऽप्याशापूर्णहृदयस्तरुणो निर्गतः । पार्वती चोत्कटरोदषी निमग्ना बाष्पाकुलनेत्रा दृष्टिगोचरं यावत्तं पश्यन्ती स्थित्वा शनैः शनैर्गृहान्तर्गता ।



॥ श्रीगणेशाय नमः ॥

# १० क्षणिकविभ्रमः

पुण्यपुरात्पञ्चषक्रोशदूरस्थायां ग्रामटिकायामेकस्यां न कोऽपि प्रायेण वृत्तपत्रमपठत् । अतो भूयिष्ठा ग्रामवासिनः स्वग्रामाद्बहिर्वर्तमानस्य वृत्तस्यानभिज्ञा आसन् । परमभूदपि काचित्कुलाङ्गना स्वग्रामवृत्तमप्यजानती खलु सुनीतिनाम्नी । क्वचित्पठितत्यक्तायाः केसरीनामपत्रिकायाः केनापि प्रेषितायाः प्रतिलेखाः सुहृत्कश्चिद्रामदासाभिधस्तस्या उपकर्तुमुच्चस्वरेण पठति स्म । परं वृत्तजातमिदं व्यतीतनैकमासमनवमेवासीत् ।

पञ्चविंशतेर्वत्सरेभ्यः प्राक् कश्चित्तरुणो हरिर्नाम त्रयोदशवर्षीयां शारदामिव विशारदामनसूयामिवानसूयामल्पवर्षीयामपि परिणतवयस्कामिव सुवर्णमिव सुवर्णां सुगृहीतनाम्नीं सुनीतिमिमां परिणीतवान् । अभूत्कस्याञ्चित्पाठशालायां मुख्याध्यापको हरिः । वत्सरद्वयोत्तरं धनवैकल्यवशात्पाठशालायां पिहितायामपि स्वार्थत्यागी हरिः कथमपि विद्यालयमिमं व्ययीकृतसर्वस्वं स्वयमेव निरवाहयद्यावच्चिरफलितप्रयत्नो नैराश्यपरवशोऽनिच्छन्नपि परोपकारादस्माद् व्यरमत् । न चिराच्च धनसाधनाभावाज्जायापती दारिद्र्यपीडितौ क्षुधयासन्नमरणाविव स्थितौ ।

निर्वर्तितकन्योद्वाहौ पितरौ सुनीतेः कोङ्कणप्रान्तमण्डलवर्तिन्यां कस्याञ्चित्पल्लिकायां कृतावासौ पत्रलेखकस्य व्यवसायमधिगमिष्यावस्त्वत्कृत आगम्यतामिहेति जामातरं सभार्यं साग्रहमामन्त्रयामासतुः । परमसिद्धिं स्वयत्नस्योरीकर्तुमनिच्छता स्वाभिमानाद्धरिणा श्वशुरस्य निमन्त्रणं निराकृतम् । योगक्षेमाय तावच्च किञ्चिदप्यवशिष्टं द्रव्यं तयोः । अतो विवाहसमये यद्रजतहेमाभरणस्वल्पजातं सुनीत्यै तेन कृतोपहारमासीत्तस्मादेकैकं कुसीदिकेषु निक्षिप्य कथमपि सभार्यस्यात्मनो जठराग्निमुपशमितवान् हरिः । उपजीविकां प्रेप्सुस्तावन्नियोगपदं यदाऽभ्यार्थयत तदाऽतिक्रान्तानुरूपवयोवशात्तदयोग्यत्वाशङ्का कार्याधिकारिभिः प्रतिवारं प्रत्याख्यातोऽभूत् ।

अथैकदा व्यवसायान्वेषी संमन्त्रणार्थं नियोगाधिकारिभिः समाहूतो नगरान्तरं प्रति प्रतस्थे हरिः । स्वल्पदिनोत्तरं चाकाण्डमकल्पितं च धूमयानाधिकारिभ्यो मुद्राणां शतत्रयं सुनीतिः प्राप्तवती । धूमयाने मृतस्य भवत्या भर्तुर्घातकस्य कञ्चुककोशे द्रव्यमिदमुपलब्धमस्माभिरिति तैर्विज्ञापिता तपस्विनीयं शोकाग्निनाज्वलीदपि कुत एतावद्द्रव्यं निर्धनेन दयितेन प्राप्तमिति परमविस्मयमगात् सुनीतिः । मासान्तरे पठितत्यक्तकेसरीपत्रिकाद्वारा धूमयाने संवृत्तो व्यतिकरोऽपाठि तस्यै रामदासेन । अनेन दैवोपहतो हरिर्धूमयाने केनापि दुष्टेन निहत इति विदितमभूद्विधवायाम् । परमस्य मृत्योः कारणीभूतं द्रव्यमिदं कथं तत्सकाशमभूदिति बहुधा चिन्तयन्त्यपि याथार्थ्यं नोपलब्धवती सा । घातकश्च हरे राजकुलेऽभियुक्तः प्राड्विवाकेन येरवडाप्रदेशस्थे कारालये विंशतिवर्षपर्यन्तं वासितं इति वृत्तपत्रादवागच्छत्सुनीतिः । कतिपयदिनोत्तरं च प्रासूत सा पुत्रमेकम् । अपत्यस्यास्य संवर्धनशिक्षणादि निर्वाहयितुं सीवनादिव्यवसायैः सुभिक्षितानां गृहेषु मोदकादिनिर्मितिकार्यैश्च कथं कथमपि धनं समुपार्जयत्सा ।

अथ संजाताष्टादशवर्षीयस्तदात्मजः कस्यचित्कृपणस्य वणिजो विपण्यां नियोजितः सन् दशमुद्राङ्कितपत्रं मूर्खोऽयं मामिचूर्णितमपाहरदिति आङ्गिवाक्स्यादेशादेकवर्षपर्यन्तमुपरिनिर्दिष्टे कारागारे न्यरोधि । सर्वमेतन्मंवृत्तं नितराममह्यमभूत्सुनीत्याः । व्यचिन्तयच्च सा । 'कलङ्कोऽयं मरणादप्यतिरिच्यते खलु । वरं यदि पुत्रो मेऽम्रियत गृहे हि कुलदूषणमिदम् । अहो वत्सेऽस्मतः प्रागेव तदीयपितृपादा दिवं गता इति महाननुग्रहः खलु विधेः' इति । भूयिष्ठा भारतीययोषित इव हि पत्यौ बद्धनिष्ठा पुत्रस्य पुरतः सत्यव्रतादर्शमन्यमानानां गुणगणाननवरतं प्रशंसन्ती सत्यदेवतायाः अपरिमितवैशिष्ट्यं बालहृदये दृढं निवेशयितुमहरहः प्रायतत साध्वी । परं हन्त प्रयत्ना इमे निष्फला एवाभवन्निति विगलितधैर्या समभूदियम् । तावत्सज्जनमहितं हरिं स्मारं स्मारं सुतं दिदृक्षुः सुनीतिरेकदा वैशाखमासे मार्तण्डस्य चण्डातपसंक्रान्ता कारालयं प्रति प्राचलत् । दीर्घाध्वनि स्खलत्पदन्यासं शनैः शनैर्गच्छन्तीयं कथमपि बन्धनागारमासाद्य बहिर्विन्दितामात्मजस्य तं दृष्ट्वा दुःखभाजः सन्दोहमद्राक्षीत् । ततः स्वात्मजमुद्याने भूमिं खनन्तं न्यशामयत् च कनिष्ठापराधिनिर्विशेषमेवाकलयत्सा । युवकस्तु निशितशूलाग्रेणेव विद्धहृदयामेतां समुपेत्य सोत्साहं सप्रेम च समालिङ्गत् ।

कुमारः—अम्ब किमित्येतावान् विलम्बः कृतस्त्वया । दशनिमिषमात्रं स्थितिरत्रानुमंस्यते ।

इत्युक्त्वा सत्वरं मृद्गुरुखनित्रं भुवि निक्षिप्य विजनं कोणमुद्यानस्य जननीमनयत् । कुतश्चिरायितास्मीति पुनरनुयुक्ता सा संमृज्य स्वेदबिन्दुचिह्नितं ललाटं सकृच्छ्वासम-वादीत्सुनीतिः 'ग्रामादितो दीर्घमार्गे शिथिलाङ्ग्या मया शीघ्रं चलितुं न पार्यते वत्स' । इत्यभिधाय तरोरेकस्याधो विषमशिलायामुपविश्य पटाञ्चलसंपुटीकृतान् स्वादुफलखण्डान् सुताय प्रादात् । निरवशेषमात्मवत्सकरान्मोदकानालोक्य, 'आ, अपि त्वयैव निष्पादिता एते' इति सहर्षं साभिलाषं निगद्य मातुश्चरणयोः सविधमुपविश्य च भूतले मिष्टान्नखण्डान् निर्दष्टुं दन्तैरारब्धवति माणवके सुनीतिरतिविषण्णहृदया जोषमतिष्ठत् ।

कुमारः—अम्ब, वनेऽत्र कश्चित्सौम्यो महानुभावो येन सह संलपितुमर्हसि । मदिहागमदिवसादारभ्य चिरपरिचितः सुहृदिव मयि स्निह्यत्येषः । सर्वैरपि बन्दिभिः संभावितोऽसौ । प्रतिदिनमस्मान् विनोदयितुं रामायणं प्रोच्चैः पठत्येषः ।

इत्युक्त्वा मिष्टपूरितमुखेन वक्तुमक्षमो व्यरमत्क्षणं बटुः । सुनीतिस्तु पुरो बद्धदृष्टिः सबाष्पलोचना स्वजीवनस्य पूर्वापरशोचनीयसंवृत्तस्मृतिपरम्परां चिन्तयन्ती नतमुखी निश्चलैवासिष्ट । कुमारस्तावत्पुनर्मुखरीभूय संलपितुमुपाक्रमत । एतादृशः पुण्यात्मा कुतः कारायां वसति इति न वेद्मि किञ्च । न कदापि भाषतेऽसौ स्वात्मानमधिकृत्य ।

इति सुतस्य वचनस्तोकैर्वचो विषादशून्यमानमायास्तस्याः कर्णसंपृक्तं नास्पृशत् खलु । सा हि चिरप्रवासात् पुत्रस्यारोग्यदर्शनाच्छोकातिशयेनाभिभूता तदुपदिष्टवृद्धबन्दिकुला-नुकारेण श्रवणकटुना मदीयवत्सस्य मनोऽवलोकनेन च 'भगवत्कृपया पूर्वजानां पुण्यैश्च

पितास्य शोचनीयदशामेतां प्रत्यक्षीकर्तुं नाजीवदि'ति पुनः पुनर्धन्यवाद कृतज्ञतापुरःसरं परमात्मानमप्यासीत् ।

कुमारः — अम्ब ! स्निह्यति मयि पुत्रनिर्विशेषं महाभागोऽयम् । मदम्बां द्रष्टुमर्हसीति मया प्रार्थितोऽयं किञ्चिद्दोलायमानचेता हेपित इव तूष्णीमतिष्ठत् । न जाने क्वाथ गतोऽस्ति । प्रायः पर्वतीशैलं यातः स्यात् ।

सुनीतिः — पर्वतीदेवालयम् ?

कु० — नहि, नहि, । पर्वतीशैले खण्डिताश्मराशिं संचेतुमेव ।

संयमितबाष्पप्रवाहा यावदेषा तपस्विनी स्तम्भिता निःशब्दा मुहूर्तं तिष्ठति तावदस्त्यागततानौ ततो निर्गमद्योतको घण्टानादः प्रोच्चैरध्वनदभ्यध्वनच्च । तदाकर्ण्य सपद्यासनादुत्थितो तामभणन्माणवकः ' कदा पुनरायास्यसी'ति । शृङ्खलितपादस्याग्रजस्य दुरवस्थादर्शनमसहमाना सा प्रत्यवादीद् ' वत्स, पुनरागन्तुं न पार्यते मया । रामदासपितृव्यस्तु प्रतिसप्ताहमायास्यति स्वकुशलवृत्तोपलब्ध्यै । तेन साकं तवाभीष्टं खाद्यं प्रेषयिष्यामि ' इति सगद्गदं निगद्य तनुजस्य कुन्तलकलापपरिकलितमुत्तमाङ्गं परामृश्य निरयात्सुनीतिः । पुत्रदर्शनोत्कण्ठितयापि तपस्विन्या पुनर्नैव तद्दिशि दृष्टिक्षेपः कृतः ।

तावत्कुलदेवतां भगवतीं शान्तादुर्गामर्चयन्ती प्रोच्चस्वरेण सुहृदा रामदासेन पठितां महाभारतकथां प्रतिसायं सावधानं शृण्वती क्वचिद्रात्रौ नेदिष्ठमन्दिरपुरोहितेनानुष्ठितस्य हरिकीर्तनस्य श्रवणेनात्मानं विशोधयन्ती, दिवा च सीवनादिकार्यैः स्वल्पद्रव्यं समर्जन्ती पत्युर्विनाशोत्तरं स्वजीवनं तृणाय मन्यमाना स्वपुत्रस्य कुशलमन्तरा विधूतेतरवासना पूतहृदया कथमपि कालमयापयत्साध्वीयम् ।

अथाद्य सुतः कारागृहान्मोक्ष्यत इति श्रुत्वा सोत्कण्ठमाभानूदयात्तं प्रतीक्षमाणा तस्य शय्यागारं प्रत्यग्रमलमिश्रितं सुव्यवस्थितं च विधाय तस्याभीष्टमिष्टखाद्यं निष्पाद्य मुखशालायां भित्तिगतफलकेषु स्थापितानि ताम्रपात्राणि निपुणं निर्णिज्य, प्रवेशद्वाराग्रेऽयत्नलभ्य मङ्गलसूचकगोमयमालामुपलिप्याजिरं, द्वारस्य बहिःकुट्टिमभूतले श्वेतरक्तपीतहरितचूर्णेन रुचिररुचिररङ्गावलिचित्रचयं विरचय्य, मुखशालाया निर्मलकोणे स्थापितायाः कुलदेवतायाः प्रतिमां नवदुकूलाम्बरेण परिधाप्य स्नपित्वा च तल्ललाटमुत्फुल्लकेतकीरजःपुञ्जपिञ्जरेण, मालतीसुमनमालयालङ्कृत्य च तां, पराह्णे सूनोर्धौतधवलवस्त्रजातस्य संशोध्य छिद्राणि, पुनश्च तस्य निपुणं सन्धीकरणे सा व्यापृताभूत् । सुहृद्रामदासस्तावद्दैनिकनियममनुसृत्य श्रीमन्महाभारतं प्रोच्चैः पठंस्तस्य महाराष्ट्रीयभाषया सानुवादं प्रवचनमकार्षीत् । क्वचित्तावत् समीपवर्तिदेवमन्दिरादनवरतं सायंतनिकघण्टानिनादः, क्वचिद्वेदीयसो ग्रामाद् धान्यादिपूरितशकटपरम्परायाः क्वणितं पथिक्षिप्तप्रमार्गे स्वनत्, क्वचिद् ग्रामस्यार्धनग्नानां भैरागां ग्रामचत्वरस्थे कचवरराशौ धान्यकणान्मार्गयतामाक्रोशाः, क्वचित्सोत्साहं परिक्रीडमानानामन्येषां पटूनां कलकलः श्रवणगोचरतामयात् ।

रामदासः—अत्र समाप्तः शान्तिपर्वणि षड्विंशतितमोऽध्यायः ।

सु० —(कृतज्ञतापूर्वकम्) सुदीर्घं पठितं भवद्भिरद्य। पश्चादनस्तयोऽधुना। न चिरात्सूर्योऽस्तमनं भविष्यति। परं वत्सो नाद्यावधि समायातः।

रामदासः —समाश्वसिहि, भ्रातृजाये।

सु० —(सकातर्यम्।) अप्यन्यथा निश्चितं स्यादधिकारिभिः।

रा० —नहि, नहि,। न कश्चापि मत्कुशिश्चितमन्यथा कर्तुं पारयेत्। नास्ति धर्मालयः कारागारः खलु। भवत्याः सुतस्य बन्धनावधिः समाप्तिं गतोऽद्य। अद्यैव निर्मोक्ष्यतेऽसौ।

सु० —कथितमेतन्मे भवद्भिर्मनःपोहलिका। (तथैवेति सकम्पमकम्प्यं सूचितं) कथमेष प्रत्यभात् ?

रा० —कारायां विमोचनं न नर्मणि मुञ्चति। 'निरपराधोऽहं मम्महस्थामिनं विसृष्टमि' त्यवादीदसौ हः।

सु० —किं चन्द्रिका मह यद्वत्स्योऽस्ति मम सुतः? अहह! कीदृशं विधेर्घटना यत्कारावासिनि जने स्निह्यत्येषः।

रा० —भ्रातृजाये! चिरात्कल्पितोऽपि कारायामनिन्द्याचारः पुरुषोऽयमिति वदन्त्यधिकारिणः। भवत्याः पुत्रोऽस्य परमप्रीतिपात्रमिति श्रुतं मया।

सु० —(सविषादम्) किं भविता परोऽमे। हन्त विधेरासीत् विचित्रास्ति सा तस्य स्वैरवार्ता।

रा० —अलं शोकेन, भ्रातृजाये। सर्वमपि पर्यन्ते शुभमेव भविष्यति। कारावासेन वत्सः शुद्धाचारो भवितेति निश्चिनोमि।

अथ क्रमेण मन्दिरस्य घण्टानिनादेन प्रमेयमानेन सह सुनीतेः पुत्रस्य पुनर्दर्शनोत्कण्ठापि घनीभूता।

सु० —(कम्पितशिराः सविषादम्।) सुदीर्घपरिश्रमस्य कीदृगनुमोदनोऽयम्।

रा० —अलमतिनिर्वेदेन। मङ्गलदिनेऽस्मिन् भवत्या विधूय सर्वशोकावहचिन्तनं प्रसन्नात्मना भाव्यम्। न चिरादायास्यति नन्दनो भवतीयमन्दानन्दनयनजलबिन्दुभिः स्नापयितुम्।

सु० —(चिरस्य वचनमश्रुत्वेव) नैकवर्षेष्वेकैकजलबिन्दुवत्स्खलनाग-धनानि प्रतिदिनं संरक्षितानि मया। देवमन्दिरनिर्माणेन दीर्घकालीनमनसस्य निवृत्तिर्भविष्यतीति पुरोहितेनाभिहितम्।

रा० —विदितमेव सर्वमेतन्मे। परं कार्येऽस्मिन् सुमहान् व्ययो भविता।

सु० —अथ किम्। अन्यथा किमर्थमनल्पकष्टानि सोढ्वा धनं संचितं मया। इदानीं फलेनास्मिन् सन्निधेयं चित्तं देवमन्दिरनिर्मितौ।

गृहाद्बहिर्ध्वानपादन्यासध्वनिमाकर्ण्य 'समायातो वत्स' इति ससंभ्रमं च द्वारं प्रति धावन्तीं 'क्षणं प्रतीक्षस्वाहमेव यास्यामी'ति निवार्य रामदासस्त्वरं बहिरगात्।

सुनीतिश्च तावत्सघडघडं स्फुरद्वक्षः उपशमयितुमिव महानसमसर्पत् । तावद्रामदासेनानुगम्यमानः प्राविशत्सुखशालां विंशतिवर्षीयः प्रांशुरपि सरलाङ्गयष्टिः कृशाङ्गोऽपि चारुशरीरः प्रफुल्लाननः सूनुः सुनीत्याः । "कियच्चाह्लादकं पुनरागमनमिह । क्वास्ति मदीयाम्बे'तीतस्ततो वीक्ष्य प्रमृज्य च कञ्चुकाञ्चलिकया स्वेदबिन्दुरूषितललाटमब्रवीद्युवकः । महानसं प्रत्यङ्गुल्या निर्दिश्य 'तत्र मित्रस्यागमनमत्र सावधानं समादेवं निवेदनीयं भगवत्यै सुनीतिदेव्यै' इत्यादिशद्रामदासः ।

कुमारः—कुतः ? अपि मत्सहचरस्य प्रवेशस्तस्यामसंतोषं जनयेत् ? स्वल्पकालमेवात्र स्थास्यत्येषः । प्रायः कतिपयघटिकोत्तरमपि निर्यास्यति ।

रा०—वत्स, त्वां पुनरालोक्य त्वज्जननी किञ्चिद्विसंभ्रान्ता भवेत् । क्वास्ति ते सखेदानीम् ?

कु०—प्रतीक्षतेऽसौ चत्वरस्य कोणे । आवयोर्मातापुत्रयोः समागमसुखस्य विच्छेदो मा भूदिति 'गम्यतां तावत् । सोत्कण्ठं प्रतीक्षमाणा मम जननी पुनरागमनेन प्रहर्षबाष्पधाराभिः प्रक्षाल्यताम् । पश्चात् त्वामनुयास्यामी'ति सविवेकमुक्तं तेन ।

इति वदति तस्मिन् प्रादुरभूत्सुनीतिर्मुखशालायाम् । आलोक्यैनामम्ब ! अम्ब ! इति सहर्षं संबोध्य तां प्रत्यधावत्कुमारः । सा च तं गाढं परिष्वज्य वत्स ! वत्सेति निगद्य संयम्य रुदितं नयने च सद्यो वस्त्रप्रान्तेन प्रमृज्य कियान् क्षामः क्षामः संवृत्तोसीति पुत्रस्य ग्रीवां, पृष्ठं बाहू च समस्पृशत्पुत्रवत्सला सुनीतिः ।

कु०—(सहस्य) अम्ब ! पूर्वापेक्षया पीनाङ्गोऽस्म्यद्य ।

इत्युक्त्वा मुखशालाया मध्यवर्तिन्यां दोलायां तामुपवेश्य स्वयं च तस्याः पादयोः सविधे भूतले समुपविश्य कुतो नागतासि पुनः कारामिति मातुर्हस्तपल्लवं भूयो भूयः परिचुम्ब्यापृच्छद्युवकस्ताम् ।

रा०—वत्स ! नास्ति समीपे कारागृहम् । देहदौर्बल्याद्दीर्घाध्वानं भ्रमितुं कथं प्रभवेत्तवाम्बा ।

कु०—सर्वत्र भवत्सविधे यानम् । किमिति नानीतेयं भवद्भिस्तेन ।

सु०—वत्स ! शृङ्खलितपादं त्वामालोकयितुं दुःसहमभून्मे ।

कु०—अम्ब ! मत्तो देवितासीस्त्वमिति न विस्मये । इतः परमाजीवं सदाचारनिष्ठः स्थास्यामि ।

सु०—किं नाम वक्ष्यन्ति प्रतिवेशिन इति शङ्केतरां भयेन ।

कु०—अम्ब ! मा स्म शुचः । नगरान्तरं यास्यामि । कियद् व्यथितोऽभवं यत्कृतिर्थं पापमनुतापेऽहनयेति परमात्मैव वेत्ति खलु । अनवरतं विचिन्तयन् स्वापराधं निशासु दीर्घमुद्विग्नचक्षुः स्थण्डिलेऽशयि ।

रा०—नास्ति किमपि अति वचनमनुगतम् ।

सु०—प्रायो घातको निजसुतमस्मात् । अलमिदानीं कारागारस्य वार्तया । सर्वमेतत्स्मृतिपथात् प्रमार्ष्टुमीहे । वत्स ! एहि तावत्प्रापितशिरास्त्वां प्रतीक्षते गोशालायाम् ।

कु०—तिष्ठ, तिष्ठ क्षणमात्रम् । मित्रमुद्दिश्य भूरि निवेदनमवशिष्यतेऽद्यापि ।

सु०—(तत्कुन्तलकलापाभ्यन्तरे हस्तं निवेश्य) निपुणं संमार्जनमपेक्ष्यसे । एहि सत्वरं तावत् ।

कु०—(निर्गन्तुमनिच्छन्) अम्ब प्रतीक्ष्यतां क्षणम् । अर्धमपि न मयाभिहितम् ।

समीपवर्तिनो देवालयस्य घण्टानादेन प्रवर्तितेव त्वरया सुतस्य करमादाय मुखशालाया निर्गमिष्यन्ती सुनीतिरब्रवीत् 'वत्स, याहि तावत् । स्नानादिविधिर्विधीयतामाशु । व्यतीतप्रायः संध्यार्चनसमयः किल शृणोषि घण्टाघोषम् । तत्प्रायश्चित्तविधिं निर्वर्तयितुं पुरोहितेन प्रतीक्षमाणेन भाव्यम् । विलम्बः शुभोदर्कविघटक एव संभवेत्' ।

कु०—अथ गम्यतां पुरः । अनुयास्यामि त्वां सह सहचरेण मे ।

सु०—भवतु । तत्प्रतीक्षेऽहं क्षणमत्र । (इत्युक्त्वा दोलायाः समीपं तस्थौ सा ।)

कु०—अम्ब ! अकथयं यदा तस्मै मम मोक्षवार्तां तदा सानुकम्पं बाष्पबिन्दुभिराकुलितनयनोऽतिविषण्णोऽभूत् सः ।

सु०—प्रायः स्वदुष्कृत्यस्य स्मरणं तमन्तरविध्यत् ।

कु०—(मातुर्वचनं विगणय्य) प्रातस्तरां श्रीभगवद्गीतामपठच्चासौ प्रत्यहम् ।

सु०—अहो, विडम्बनेयम् ।

कु०—(किञ्चिद्दुर्मनायमानः) मा विडम्बय सुकृतिनमेतम् । (इति बद्धाञ्जलिर्जननीमभ्यार्थयत ।) वत्सरमेकं शीघ्रं तथा व्यतीतं यथा प्रत्यासीदद् विमोचनक्षणं मामाक्लिन्दत्तराम् । मित्र विरहमनिच्छतो मे निर्गमसमयं विलम्बयेयुरधिकारिण इत्यप्याकाङ्क्षितं मया ।

सु०—(सविस्मयं सखेदं [illegible]) परमाश्चर्यम् । अहो वैलक्षण्यमाकाङ्क्षायाः स्नेहबन्धस्य च ।

रा०—भगवति नेदं विस्मयावहम् । आपद्ग्रस्तयोः सहनिवासिनोः परस्परविरहोऽतिदुःसह एव ।

कु०—साधुवृत्तिरयं पुरुषः स्वविमोचनविषये नित्यं निरीहः स्थितवान् । अद्य मध्याह्नेऽद्य कारातो निर्गमिष्यता मया तस्य नामघोषणाऽश्रावि सहसा । अम्ब ! सोऽपि स्वतन्त्रोऽभूत् । तद्विमोचनोदन्ते पुनः पुनरुद्घोषिते झटिति तमुपेत्य सरभसं व्यचालयम् । स [illegible] शून्यदृष्टिर्निश्चलो विनष्टगतिरिव तस्थौ । 'सखे किमिति मौनमालम्ब्यते त्वये'ति पृष्टोऽपि नाम 'श्रेयो यदि मामधिकारिणो न मोचयेयुः । न कोऽपि मां जानाति जगत्यां, न कोऽपि वा मां प्रतीक्षते । मुक्तस्यास्य मे किं स्वातन्त्र्येण' । इति पुनः पुनः सगद्गदमगदत्सः । आगम्यतां तावत्सह मयाऽस्मद्गेहमिति तद्दैन्येनाकुलितोऽहमभ्यार्थये साग्रहं तम् ।

सु०—(चोमन्त्रितेव) किम्। निमन्त्रितस्त्वया घातकोऽत्र? वत्स, वत्स किं वक्ष्यन्ति प्रतिवेशिनः? तत्प्रवेशोऽत्र नानुमन्यते मया। तादृशेन व्यवहारेण विश्रंशावतंस-जैनकचरणैः परमपूज्यैर्भूयोऽपि पङ्क्तेर्बहिर्मोच्यम्। मम च कुलदेवताया दीर्घोपासनानुष्ठानादिना नैष्फल्यतां गन्तव्यम्। एतादृशः पुरुषस्य प्रतिषेध्यः प्रवेश इह। विद्यन्ते धर्मशालाः पुण्यनगरे नातिदूरमितः। सर्वेऽपि समाश्रीयन्ते तत्र। रोगिणोऽपि।

कु०—हन्त! किमित्थमनपराधो जनोऽन्यथा व्यपदिश्यते त्वया। यदि त्वमेतमवलोकयेस्तर्हि न कदाप्येवं ब्रूयाः। भवतु। यद्येनं मत्कृते नेच्छसि तदहमपि सहानेन क्वापि यास्यामि।

सु०—(सविषादम्) बन्दिना सार्धम्? क्व यास्यसि वत्स?

कु०—अलं चिन्तया मद्विषये। अद्यापि धनार्जनं दुःसाध्यं मे भवेदेव।

सु०—(दीर्घं निश्वस्य।) तव पितुरसमितयशोऽवलम्ब्य तव भाविक्षेमं सम्यगाशास्यते मया। परं बन्दिनां संसर्गेण सर्वथा तव विनाश एव भविता।

रा०—वत्स! अलं संत्रास्य मातरम्।

कु०—(साभिनिवेशम्।) परं निमन्त्रितोऽस्ति मयाऽसौ। अम्ब! अनाश्रितपरिपालनं धर्मो साधूनामिति त्वयैव बहुधा मे कथितम्।

सु०—(सरभसम्।) भयावहः किल घातकस्य प्रवेशोऽत्र। कुमार्गे त्वां नयेत्। स निलुण्ठेदप्यस्मान्।

रा०—भ्रातृजाये, मा स्म वृथा भैषीः। वत्सस्योत्साहो न प्रतिहन्तव्यः।

सु०—हा, हा, कारागृहवासिनमनवरतं ध्यायतोऽस्य चेतो द्वादश मासान् निष्प-धान्नमवाहार्दीभूतस्याया मातुर्विचारविधुरं स्यादिति सुतरां शोचनीयं खलु। (इति संरुद्धकण्ठमुद्दामं ललाटतलमताडयत् सा।)

कु०—(समार्द्रवम्) अम्ब! मैवं मैवम्! (तस्याश्चरणं परिचुम्ब्य) वच्मि सत्यमेव शिक्षयामीति। प्रसीद तावत्। निराश्रयो मत्सुहृदद्यैव समाश्रीयताम्। न कोऽप्यनुतापस्ते भवितेति प्रतिजाने सशपथम्।

सु०—(अथ किञ्चिद्द्रुतान्तःकरणा) बाढम्। प्रदास्यतेऽस्मै भोजनम्। गोशालायां सुखासनम् तत्रैव च शेतां नक्तम्।

कु०—(सखेदम्।) अहह! गोशालायां बहिष्कृत इव? चाण्डाल इव? कुक्कुर इव? भवतु तावत्। अहमपि तत्रैव स्वप्स्यामि भूतले, प्रदास्यामि चास्मै मत्खट्वाम्।

सु०—कुतः कारायाः विमुक्तमात्रो कलहायसे सह मया? किमिति दुर्भाग्यां मामाकुलयितुं प्रवृत्तोऽसि? देवालयं सत्वरमागच्छ। अहं तावत्प्रदक्षिणां देवतागारमभितो विधाय त्वां प्रतीक्षमाणा तत्रैव स्थास्यामि। श्रूयते घण्टाघोषः। गन्तव्यं मयेदानीम्।

इति व्याहृत्य द्वारं प्रति प्रतस्थे सुनीतिः। भग्नमनोरथं पुत्रमनुकम्पमाना—

रा० — वत्स, मा स्म शुचः। निवसतु महानुभावोऽयं मद्गेहे। नववस्त्राण्यपेक्षतेऽसौ।

सु० — ( सपदि परावृत्य ) वत्स, स्वप्नकोष्ठे स्थापिता पेटिका मे सावधानं रक्ष्यताम्। तदभ्यन्तरे निहितं सर्वमेव मद्द्रव्यम्। ( इति सरभसमादिश्य सत्वरं निरगात्। )

कु० — ( सनैराश्यम्। ) अहो कठोरता प्रकृत्याः शिरीषपुष्पकोमलहृदयाया जनन्या मे। सत्पथस्यादर्शभूतो मत्पिता नीचात्मेव परकीयधनमाहरेदिति कुत्सितो विचारस्तदन्तः प्रविष्ट इति चेन्निश्चिनुते मच्चेतः। ( सतिरस्कारम् ) पादाङ्गुष्ठेनापि न तत्स्पृशेत् सः।

रा० — वत्स! प्रायेण भूयिष्ठः सज्जना बन्दिवर्गाद् बिभ्यति।

इत्युक्तमात्रे रामदासेन ' नाहमेतामुपालभे या ' इति द्विरुदीरितं वचोऽश्रावि सहसा। तत्क्षणं च व्यलोकि देहल्यामेकः पञ्चाशद्वर्षीयो बन्दिवेषधारणेनावृतशिरा अनुपानत्कः श्मश्रुलः पुरुषः।

कु० — ( सहर्षम् ) आः! आगम्यताम्! आगम्यताम्! तात कदाऽऽयातोऽसि? कुतः प्रविष्टोऽसि?

गृहाभ्यागतः — कारायास्तव निर्गमनोत्तरमिह न चिरात्त्वरां संभाव्य पृष्ठद्वारेणालक्षितः प्राविशम्।

कु० — ( रामदासस्य कर्णे ) तदनेन संलापो नः श्रुतः स्यात्।

गृ० — ( तस्य पृष्ठे हस्तं विन्यस्यन् ) वत्स! आस्तां तावत्। मा ग्लपयात्मानं वृथा।

कु० — आयासेनोपलब्धं स्यात् सदनमिदं त्वया। अपरिचितावसथोपलब्धौ निपुणोऽसि मन्ये।

गृ० — विशालनिकामगोपुरमप्यवलोकितस्य स्वमित्रस्याभिज्ञाने किं नाम नैपुण्यं द्योतेत।

कु० — सुपरिचितं गृहमेतत्ते?

गृ० — यथात्मानं तथैवावैमि किलेदम्।

कु० — ( विस्मितो रामदासं संबोध्य ) कथमेतत्संभाव्यम्।

रा० — स्वयमेव तदाख्यास्यति महाभागः।

कु० — अथ मदम्बापि परिचिता स्यादस्य।

रा० — अथ किम्।

कु० — ( सखेदम् ) तत्किं भवद्भिर्न विज्ञापिता मा?

रा० — यतः ' वृत्तान्तरहस्यभेदं भगवत्याः सुनीतिदेव्याः पुरो न करिष्ये ' इति तस्मै चिरात्प्रतिश्रुतवानहम्।

कु० — तत्तादात्म्यम्? ( सम्भ्रममुखो तौ निरीक्षमाणः ) कुतस्तद्दिदृक्षितुम्पम्? कथय विनाश्रम्य मार्गम्।

गृ० —वत्स! सर्वमेव वृत्तं ते कथयिष्ये। मद्दर्शनात्त्वन्माता संक्षुब्धा भवेदिति शङ्कयोपस्थातुमिह नैच्छम्। परं प्रतिश्रवस्य मे भङ्गो मा भूदिति समायातोऽस्मि।

कु० —कुतः संक्षुब्धा भवेदम्बा? ऋजुस्वभावाऽन्वर्थनामा किल मन्मातृश्री।

गृ० —वत्स, साक्षादेषा भगवती क्षमादेवीति विदितमेव। तत्र जन्मतः प्रागेव परिचितेयं मे।

कु० —(सविस्मयम्) मज्जन्मतः प्राक्?

रा० —तथैव।

कु० —(उभौ निपुणं निरीक्ष्य) क एषः? कस्त्वम्?

रा० —(मन्दमन्दम्) नास्त्येष तव जनकेतरः।

कु० —(सोच्चैः पुनः पुनः प्रहस्य) मज्जनकः! कुतो मां विप्रलब्धुं प्रवृत्ता स्थः। अलं क्ष्वेलया।

गृ० —यदि सखीवचोऽहमिति विश्वसिषि तत्तव पिताहमित्यपि विश्वसिहि।

कु० —कुतस्त्वया मोक्तं पूर्वमेतत्? किमेतद्वृत्तम्? आबाल्यान्मदीयतातपादा धूमशकटे येनचन साधनेन निहता इति निवेदितोऽहमम्बया। (प्रहस्य पुनः पुनः) नहि, नहि, मन्ये नर्मप्रियः संजातोऽसि बन्धनविमोचनात्। त्वां जीवन्तं जानती चेन्मज्जननी विना त्वद्दर्शनं क्षणमपि न प्राणानधारयिष्यत्। न ह्येकोऽपि न दिवसो व्यतीतस्त्वामचिन्तयन्त्यास्तस्याः।

हरिः—(सखेदम्) हन्त, न व्यजानात्सा यदहं कारायां वासित इति।

कु०—परं भ्रातरेवाद्य प्रोक्तं त्वया यन्निराश्रयं मां न कोऽपि प्रतीक्षत इति।

गृ०—सत्यं, सत्यमेव तदपि। (मन्दस्वरेण) विंशतिं वर्षाणि मृतकल्पः स्थितोऽहम्।

कु०—अथ यो निहतो धूमयाने। अपि त्वया... नहि, नहि। उदयेद्दिवाकरः पश्चिमगिरौ, निशापतिरपि गगनतलादग्निवृष्टिं निपातयेत्परं पुण्यपरायणस्य प्रमथेन त्वया घोरमिदं कृत्यं व्यधायीति स्वप्नेऽपि न चिन्तयेयम्। तथापि कुतस्त्वामाजीवं कारायां न्यक्षिपन्नधिकारिणः।

हरिः—वृत्तान्तानुमेयप्रमाणादेव। (ललाटं प्रमृज्य) हन्त, कथयिष्यामि क्रमेण सर्वं ते।

रा०—उपविशतु तावत्। दीर्घाध्वानं पादचारिणानेन श्रान्तेन भाव्यम्।

उपविश्यतामुपविश्यतामित्युक्त्वा करमादाय हरेः कुमारो दोलायां तं समुपवेश्य तद्वृत्तशुश्रूषोत्सुकस्तत्पार्श्वे पर्यङ्कस्थो यावत्तिष्ठति तावत् पूर्ववृत्तं कथयितुमारभत हरिः।

हरिः—अपि तव जनन्या कदाचिन्निवेदितं ते यत्तव जनकः पूर्वमेकदा व्यवसाय-गवेषणपरो धूमयानेन नगरान्तरं प्रस्थितः पुनश्च गेहं नायात इति। (तथेति कुमारेण प्रतिपन्ने) स्मर्यतेऽस्मिंस्तस्मिन्नचिन्त्यतया निजाङ्कनिर्दिष्टमभ्रगम् केयूरं विर्भावयतीव मन्त्रा-

साय पर्याप्ता मुद्राः । ता आदाय प्रतस्थेऽहमितः । अथ प्रचलति सवेगं धूमयाने घोरदुश्चिन्तासन्तानेन सहसाऽऽक्रान्तोऽभवम्। येभ्यः कुसीदिकेभ्योऽस्मद्गृतये वैश्यादेकमात्राहाराभ्यामावाभ्यां कथं कथमपि प्राणान् धारयद्भ्यामृणं गृहीतं तेऽमी वितीर्णधनं प्राप्तुं प्रत्यहमिह समुपजग्मुः। आसीदत्तदा तव जननी प्रसवोन्मुखी। इति चिन्ताग्निपरितापाभिभूतो धूमयान उद्विग्नेत्रः स्थितवाहनम्। व्यचिन्तयं च। अहो सहाध्यायिनो मे मदपेक्षया न्यूनाभ्यस्ता अपि स्वस्वव्यवसायेषु लब्धवर्णाः। परं दैवोपहतस्य मे चिरं कृतदीर्घायासस्य प्रयत्नाः सर्वेऽपि नैष्फल्यमेव प्रापुः। हन्त इदानीं भिक्षापात्रहस्तस्य द्वाराद्द्वारं पर्यटनसमयः मे समुपस्थितप्राय' इति।

अत्र रुद्धकण्ठेऽस्मिन् विरतवचसि 'गहना कर्मणो गति' रिति रामदासः सानुकम्पं दुःखग्रस्तं मित्रं सान्त्वयितुं भगवतः श्रीकृष्णस्य सूक्तिरत्नमुदैरयत्।

हरिः—व्यचिन्तयमहं जन्मान्तरे किं नाम घोरपापं व्यधायि मया यस्य फलमनुभूयतेऽस्मिञ्जन्मनि। ततश्च 'गुरूणामभिमतं तिरस्कुर्वाणान्मनुजान् कुलदेवता न हि क्षमत' इति मुनीत्या भूयो भूयः समुदीरितं वचोऽस्मरम्। विपन्नालमिदं ध्यायतो मदन्तर्लीना काऽपि वाक् सहसा मामबोधयत्-'यावत्तव दिवंगताया मातुः प्रतिज्ञा न त्वया निर्वर्तिता स्यात् तावदापत्परम्परामेव त्वमनुभविष्यसी' ति। क्रमेण तावत्कस्मिंश्चित् स्थानके धूमशकटान्तरं प्राविशम्। प्रकोष्ठेऽस्मिन्नेक एव गाढनिद्रितः सहाध्वगो व्यलोकि मया। धूमयाने महावेगेन खडखडखडशब्दं धावति सरभसमनवरतं प्रकम्पितोऽपि मूर्छित [illegible] पान्थोऽयमविच्छिन्ननिद्रः काष्ठपीठे शयित एव स्थितः। कतिपयक्षणोत्तरं कुसुमशबलमिव तारकितं वियदराजत। न चिराच्च कृष्णपक्षकलावानमृतदीधितिः पाण्डुरपिङ्गलद्युतिर्धृतकषायाम्बर इव संजातनिर्वेद इव विभावर्याः पराङ्मुख इवाभ्यतिष्ठदन्तरीक्षम्। क्रमेण विगलितोदयरागो द्विजराजोऽम्बरापगावगाहमानो धौतसिन्दूर इव धूमयानस्य गवाक्षतः स्वपाण्डुधाराभिः सुप्तस्य पथिकस्याननं प्राक्षालयत्। अहं [illegible] सुप्तस्य निस्तेजो मुखं दीर्घं निरीक्षमाणः संमुखीने विष्टरे स्थितवान्।"

अत्र क्षणं विरतवचसि हरौ 'क आसीत्पुरुषोऽयम्? भवतः कारावासस्य कः संबन्धोऽनेने' ति तद्वार्तायामविश्वसन्निव बटुरवादीदधीरम्।

हरिः—(निर्व्याजम्) वत्स, न खलु मिथ्यावार्ताजालं विरच्यते मया। निद्रिताध्वगस्य मृत्युकल्पेन वैवर्ण्येन सन्निश्चलत्वेन चाकृष्ट इव कुतूहलात्तमुपेत्य निपुणं तन्मुखं व्यरूपयम्। श्वासदुत्थितो नाहोऽपि मया घ्राणाग्रेण। परं श्वासः नाभूदेव। ततश्च सशङ्कं तदुपरि नत्वा निर्गतश्वासोऽयमित्यबोधि मया। कोऽयं नु पान्थः? कथमस्यात्र देहः समभूदिति कुतूहलपरवशस्तमधालयम्। परं दारुदण्ड इव निश्चलं पयायमासीत्। पुनरपि सरभसमेवं यावद्दोलयामि तावत्तदुपवर्ह्तदेशचर्मनिर्मितं कोशमेकं न्यपतद् भुवि। क्रोडीकृतं तदन्तरे सावरणं पत्रमेकमपश्यम्। आवरणोपरि पान्थस्य नामधेयं वासस्थानं च लिखिते आस्ताम्।

कु०—क आसीदेषः?

हरिः—केनचिदविज्ञातेन क्षेत्रपतिना पञ्चाम्बुदेशीयेन मान्यमनेनेति तत्रागतस्त-र्कितं मया। कोशोऽस्मिंस्त्रिंशन्मुद्राङ्कितपत्रपुञ्जं निवेशितमासीत्। व्यचिन्तयं च। अहो! हस्तगतेयद्द्रव्यो वराकोऽत्र मद्वितीयो विगतासुः। केयं घटना विधेः। आगामिनि क्षणके कोऽपि चपलहस्तः पथिकोऽत्र प्रविश्यैनं द्रव्यमाहारयिष्यति। 'कुत आगतोऽयं, क्व गन्तु प्रावर्तत, कथमकस्माद् गतासुरभूदि'ति ध्यायतो ममान्तरामानसतरङ्गतामापद्यमाना 'यावत्तत्र दिवंगताया मातुर्वृत्तं न निर्दिश्येत तावद्विपत्परंपरामेवानुभविष्यसी'ति पुनः पुनः हृदि मे कापि वाक् प्रादुरभूत्। अवधूय झटित्येतां वाणीमिमां प्रस्तुतविषयमधिकृत्य समधिकजिज्ञासाविवशः कोशस्याभ्यन्तरे पुनर्निपुणं निरीक्ष्य तद्धस्ताङ्कितं पत्रमेकमपश्यम्। लिखितं चासीत्तस्मिन्। 'दैवयोगाद्यस्य कस्यापि करतले त्रिंशतं मुद्रा इमा निपतेयुस्तेनो-पयुज्येत द्रव्यमिदं भूतये कस्याप्यकिञ्चनस्य देवताराधनार्थं वा। नास्ति मे जगत्यां कोऽपि बान्धवो न वा सुहृत्। दैवाधीनायां मृतौ मे न कोऽपि प्रतिवाच्य' इति। पत्रमेतत्पाठं पाठं व्यचिन्तयम्। 'अपि घटनेयं वैकल्यग्रस्तस्य दुःखोपशमनाय मे विधिना विरचिते'ति। परं झटिति विचारमिमं विधूय कोशे पत्रमनादिष्टं निवेश्य यथापूर्वं प्रेतस्यो-पधानस्याधः पुनर्निधाय च संमुखीनविष्टरे कृतपदः स्वप्तुं प्रायते। परं निद्रादेव्या परित्यक्तस्य विस्फुलिङ्गनयनस्य चेतसि मे क्रियासमभिहारेण स एव ध्वनिरनवरतं प्रत्यध्वनत्। सपत्नीकस्य मे द्वाराद्द्वारमटतस्तुम्बीकरस्य प्रत्यासन्नसमयस्य तव प्रसुत्याऽवस्थाश्च चित्रयुग्मं मनोनेत्रगोचरतामगमत्स्फुटम्। दुर्निवारचिन्ताक्रान्ता-न्तर्दितोऽहं जगत्यामात्मानमसहायमपश्यम्। निर्गतासुः पान्थोऽपि मां साम्प्रतं प्रावर्तयदिति व्यभावयम्। 'भोः सुयोगोऽयं दैववशात्समुपस्थितोऽस्ति ते। तमपयापयसि चेत्तदन्यः कोऽपि तेनात्मन उपकुर्यात्। श्लाघ्यः खलु तव हृद्गतविषयः। वित्तमेतद् गृहाण क्षुधार्तौ दयितां भोजय च। प्रसादय वा कुलदेवतामात्मन' इति प्रेतो मां प्राणुददिव। मदन्तर्गतभावनां मृताध्वगस्यादेशं च प्रतिस्मरन्नुत्थायाहं मन्दमुक्तोऽपि शयने घटीयन्त्रे सार्धद्वि-वादनसमयमङ्कितमालोक्य 'न चिरादितस्स्थानं धूमशकटः समागमेत्। तत्क्षणस्यान्यपरिदर्शो मा भूदि'ति निश्चितं मया। यत्स्वप्नोपपन्नः सुयोगोऽयं भाविदुःसहानर्थसन्दोहं निवारयेदिति विलक्षणव्यवहारे प्रवृत्तोऽभवम्। न चिरात् पारस्परिकव्यवहारपरिवर्तनं विधाय पथिकस्य कोशात्त्रिंशतं मुद्राणां चापहृत्य व्यवेशयं तत्स्थानपरिवर्तनिकायुक्तस्य कोशे। ततश्च तद्धस्ताङ्कितं पत्रं विदार्य पत्रखण्डानि बहिरक्षिपम्। तदनु मदीयमात्मस्थानाङ्कितपत्रिकां घटयित्वा च पथिकस्य रिक्तकोशान्तर्निन्यस्य यथापूर्वं तदुपधानस्याधः स्थापयित्वा मन्नामाङ्कि-तपत्रवर्गं मत्कोशे न्यधायि मया।

कु०—(विस्फारितनयनः) अहह! किं घटितमस्यां निशायाम्!

रा०—'स्वप्न, तव जनकेन स्वकीयनाम्नः सहाय्यभाग्ययन्तेन विनिमयः कृत' इत्येव सा कथयति।

हरिः—अहो! महाकौतुकेनात्मानं कृतार्थं कृतवानहम्।

इति स्वकन्यायुगलं स्नेहजामात्राभ्यां सहाभ्यन्तरमालिङ्गत्यन्तं हरिः।

रा० —( सानुकम्पम् ) सखे, क्षणिकविभ्रम एवासीच्चित्तक्षेपः। कृत्येनानेन व्यथाजातं सोढं त्वया विंशतिं वर्षाणि खलु।

*कु० — अनेनाजीवं कारायां न्यक्षिपंस्त्वां जाल्मा अधिकारिणः ?*

हरिः—प्रथमतस्तावद् वृत्तान्तानुमेयप्रमाणात्ततश्च परधनाहरणस्याभ्युपगमात् स्वयमेव दण्डार्हमकारयमात्मानम्।

कु० —घातकस्त्वमिति कथं प्रमाणीकृतमधमैस्तैः ? तव धूमयानप्रवेशात्प्रागेव पथिको मृत आसीदिति कुतस्त्वया नोक्तम् ?

हरिः—आत्मानमवितुं न मया व्यवसितम्। शतत्रयस्य मुद्राणामुद्गमं मा जानीयात्तव जननीति। यद्यात्मानं घोराभियोगादभिरक्षितुं प्रायतिष्ये तदा मत्तात्संरहस्यभेदोऽप्यभविष्यदेव।

कु० —तात! तर्हि वधस्तम्भेऽपि त्वामारोपयिष्यन् रक्षिणः।

हरिः—अयुक्तकारिणमात्मानं दण्डयितुमिच्छन् सर्वथा सन्नद्धोऽहमासं प्रेयस्या विश्वासनिरासान्मरणं श्रेय इति। नास्ति हि जगतीतले तदपेक्षया प्रशस्तं स्त्रीरत्नमन्यत्। सेयं साक्षान्मूर्तिः सावित्रीदेव्याः। दिष्ट्या पथिकस्य विषये गवेषणपरो न कोऽप्यासीत्।

कु० —हन्त! तन्नाम घातीकृत्य विंशतिं वर्षाणि कारायां यापितानि त्वया। अहो किमियं निष्ठुरघटना विधेर्यदियत्समीपस्थमपि त्वां लोकान्तरगतममंस्तम्बा।

हरिः—जीवन्नपि मृतप्राय आसमहम्।

कु० —( रामदासं संबोध्य ) सर्वमेतद्विदितमासीद्भवताम्। किमिति न तत्कथितं मदम्बायै भवद्भिः ?

हरिः—वत्स! न तव पितृव्योऽत्र दोषास्पदम्। तव मातुरवमाननं मा भूदिति मद्रहस्यभेदं मा स्म कार्षीरिति प्रार्थितवानहम्। मन्मरणोदन्तो हि दुःसहोऽपि कारादण्डवृत्तान्तात् दुःसहतरो भवेदस्या इति।

कु० —अयि पितृव्य! अपि सा नगरान्तरात्तन्निवर्तनाभावात् चिन्ताकुलाऽभूत्।

रा० —दिष्ट्या स्वपितुर्निर्गमाद् द्वित्रदिनोत्तरं त्वां प्रासूत सा। हन्त, पतिं सोत्कण्ठं प्रतीक्षमाणायै वृत्तपत्रे तस्य मरणोदन्तोऽपाठि मयैत्यलीकमेवाकर्ण्य तत्रभवत्यै। अपि च धूमयाने छिन्नस्य तव पितुः शवस्य देहलग्नादीर्ध्वदैहिकक्रिया च तद्वासस्थानानभिज्ञतया रक्षिभिरेव निर्वर्तितेति सत्यार्जं न्यवेदि मया तपस्विन्यै तस्यै।

कु० —( हरिम् ) किमिति मे कारायां वृत्तमिदं न कथितं भवता।

हरिः—( सविषादम् ) इदानीमपि त्वं कारायां नावेदिष्यः। अहो! स्वतन्त्रतायाः परमानन्दः! अहो त्रिभुवनैर्विमलानिलनिःश्वसनम्! पुनरागच्छेयमिहेति स्वप्नेऽपि न मया तर्कितम्।

इत्युक्त्वा हस्ताभ्यामावृत्याननं मुक्तकण्ठमरोदीद्धरिः । क्षणोत्तरं किञ्चिदुपशमित-दुःखावेगो 'हन्त! इदानीं तु धरणिभारभूतो मृत्पिण्ड इव निरुपयोगः समुपस्थितोऽस्मी'ति न्यगदत्स गद्गदम् ।

कु० —( बाष्पपूरितलोचनः ) मैवं मैवं वदतु । पत्नीप्रणयिना भवता स्वजीवितं तृणमिव निक्षिप्य चरमो यत्नो व्यधायीति धन्योऽसि भवान् । अपि विभेषि कुत्सितात्मनां प्रतिवेशिनां निन्दायाः? अलं भिया तात । स्वार्थत्यागेन पूजार्हभूतोऽसि । क्षुत्पीडितकुलाभिरक्षणाय कारागारोऽङ्गीकृतो भवतेति कथयिष्यामि तेभ्यः । विद्यार्थिभ्यो विद्याप्रदाने त्वया सर्वस्वं व्ययीकृतम् । निष्कान्ते गतेषु च वर्षेषु न कोऽपि ग्रामेऽस्मिन् साहाय्यं ते व्यतरदिति ।

*हरिः— वत्स, किमाख्यानेनानेन? विपुला हि पृथिवी । वयं च पृथ्वीतलं विभेदां समाश्रयाम ।*

इति भणिते हरिणा समाकर्णि तावद्गृहाङ्गणे पादविन्यासध्वनिः । न चिराच्च प्रवेशद्वारमुदघाटयत । तदाकर्ण्य 'सावधानम् । समायातास्ति मुनीतिदेवी ' व्यसदीद्रामदासः ।

कु० —( सर्पभ्रमं सहर्षं च ) परमानन्दार्णवेऽसौ निमज्जयतीति नास्ति सन्देहलेशोऽपि ।

रा० — शनैः शनैरेव सर्वमिदं वृत्तं निवेदनीयं तस्यै । ( हरिम् ) सखे, प्रकोष्ठान्तरं गम्यतां क्षणमात्रम् ।

इति रामदासस्य वचः प्रतिपद्य शीघ्रं समीपवर्तिप्रकोष्ठं प्रति याम्यन्तं हरिं "महोत्सवतिथमोऽयं, तात । महानन्दं प्राप्स्यत्येवास्मा पुनःसङ्गमेन भवता " इत्युदीर्य मोत्साहं कुमारस्तमन्वगात् । सुनीतिर्मुखशालां प्रविश्य ' शान्तिं वत्स ' इति यावत्पृच्छति रामदासं तावत्पुत्रकोऽपि स्वगृहनागारादाक्षिप्तः ।

सु० —कथम् ? साद्यापि किं स्नानादिविधिः समाप्तिमभ्यगा? पुरोहितश्चिराय त्वां प्रतीक्षते । अरे कस्मिन् कर्मणि व्यापृतोऽस्येतावत्कालम् ?

रा० —सहचरेण सार्धं संलपन् ।

सु० —सह चन्द्रिका? ( संत्रस्ता ) हा! परमात्मन् कथमत्र प्रविष्टोऽयम् ?

इत्युक्त्वा ससंभ्रममितस्ततो निरीक्ष्य समीपवर्तिप्रकोष्ठं प्रति याम्यन्तीं तां स्वचरणयुगः प्रसारितहस्ताभ्याम् ।

कु० —( प्रफुल्लवदनः ) चिन्तेऽस्मिन् कार्यान्तरे । प्राप्तो कोशशालायाम् । तद्दर्शनगाराद्धर्वं याम्यर्थीति मदर्थं प्रतीति सुतस्ते । अपि च तं भोजयिष्यसे महानसे, सुखशालायामपि । मिष्टान्नपात्रेण तं सेविष्यसे । तदनु सर्वेऽपि वयं चत्वारः परमस्मानन्दाम्बुधिनिमग्नात्मानः सुखं शेष्यामहे ।

इत्युदीर्य मातुर्हस्तमादाय समार्द्रं तं पयश्चुम्बन्प्रमुदितान्तर्वदुः ।

सु० —पुनस्त्वां सनिश्चयं वच्मि यदस्मद्गेहे वन्दिनः प्रवेशेन न भाव्यम् इति । ( पुत्रस्य प्रोच्चप्रहसनेन रुष्टेव ) सद्य एव केषाञ्चित्प्रतिवेशिनां तद्विषये कुत्सितसंवादोऽश्रावि मया । यदि पुरुषोऽयमिहालोक्येत प्रतिवेशिभिस्तदाधिकाधिकनिन्दापङ्केन लिप्तौ भविष्यावः । ( कुमारो भूयो भूयः प्रहसंस्तां परिष्वजते । ) हन्त ! निर्लज्जता बटोरस्य ! तव तातपादास्त्वपयाऽमरिष्यन् । ( रामदासम् ) वेत्थैतद् भवान् । नहि, नहि । सदोषोऽयं नालोक्येत गृहेऽस्मिन् । निर्गच्छतु शीघ्रम् । ( धनकोशादुद्धृत्य रूप्यपादम् ) देहि तस्मा एतत् । अनेन किमपि खाद्यं क्रीणातु । निर्गमय तं झटिति । न तुष्येच्चेदनेन चेदधिकं प्रदास्यामि । रूप्यार्धं, रूप्यमपि । परं सपदि निर्गच्छतु वराकोऽयम् ।

अथ युवको मुहुर्मुहुः प्रहसन् रामदासेन दत्तसंज्ञः प्रकोष्ठं प्रति यावद् गच्छति तावद् "गृहाणैतानि पञ्च रूप्याणि देहि तानि च तस्मा" इति सुनीतिरब्रवीत् । परं मातुर्वचनमश्रुण्वन्निव ततोऽभ्यधावद्युवा ।

सु० —अहो, मौर्ख्यं सुतस्य मे । देवमन्दिरनिर्मितेः प्रतिज्ञापि निरर्थिका भविष्यत्यद्य । विश्वगेव नतशिरसा स्थेयं मया । हन्त ! हन्त ! बालिशता बटोः ।

रा० —नहि, नहि । भवत्या नन्दनः साधुरेव । तरुणानां प्रतिभायुजामात्मबोधो वैशिष्ट्यं भजति खलु ।

सु० —( तं निरीक्षमाणा ससन्देहम् ) किमित्येवं भाष्यते भवद्भिरद्य ? नावगम्यते मया भवदीयाऽपि वाक् ।

तस्मिन्नेव क्षणे प्रकोष्ठान्ततो "निर्गतो निर्गतः पितृव्य निर्गत" इत्याक्रोशन् ससंभ्रमं सुरशालां पुनः प्राविशत्कुमारो विषण्णतमः ।

सु० —को निर्गतः ।

कु० —"मदीयं मित्रम् । मदीय ......

सु० —अथ किं त्वयाधिकमन्वेषितम् । अपराधिनो न कदापि विश्वसनीया इति कथितमेव ते पूर्वं मया ।

कु० —अम्ब, नासीदपराधी मत्सखा । हन्त ! विनष्टमेतं न कदापि द्रक्ष्यामि पुनः । 'नाभिमतोऽहमत्रे' ति व्यजानात् । ( इति वदन्नरोदीत् मुक्तकण्ठम् । )

रा० —नातिदूरं गतः स्यात् । अत्रैव क्वापि भाव्यं तेन ।

कु० —न क्वापि स वर्तते । सर्वत्रैव मार्गितो मया । गोशालायामपि ।

इति वदन् भूतले निपात्यात्मानं युवकोऽधिकाधिकमाक्रन्दत् । पर्यन्ते पुत्रस्य शोकम्य स्वयमेव कारणीभूतेति तम्यन्तिकमुपविश्य भुवि तं च समार्द्रं संस्पृश्य —

सु० —अलमलं रुदितेन । आगच्छतु तव सुहृदत्र । प्रायो निष्क्रम्योत्तरं सर्वमेव साधु भवेत् । उत्तिष्ठ स्नानपानाभ्यां च शीघ्रम् । ( रामदासम् ) अन्विष्यतां तावत् ।

रामदासो गृहात् सपदि निर्ययौ ।

घटिकाद्वयोत्तरं निष्कृतिविधौ यथाविधि देवमन्दिरपूजकैर्विहिते कुमारः सह जनन्या सदनं निवृत्तो मुखशालायां चिरमितस्ततोऽस्वस्थो गतागतं कृतवान् । स्यन्दिष्ट-नादश्रवणाद्भूयो भूयो वातायनं सरभसमधावच्च । क्रमेण रामदासः शुभ्राम्बरधारिणा हरिणा मुण्डितश्मश्रुकूर्चेनानुगम्यमानो मुखशालां प्राविशत् । प्रविष्टमात्रं हरिं कुमारो यावद्गाढं परिष्वजते तावत्कुलदेवतोपादानाय पुष्पोदकदीपादिसम्भृतं पात्रं धारयन्ती करपल्लवे सुनीतिः हरिं विलोक्य देहल्यामेव भ्रष्टसंज्ञेव निमिलितलोचनोत्कीर्णकाष्ठमूर्तिरिव मूर्च्छया क्षणं तस्थौ । पूजाभाजनं तत्करादपतद्धरणितले बद्धाञ्जलिर्हरिर्यावन्मातुरुपैति तावत्पिताचावलोक्याद्भुतमस्तैव मन्यमानोऽस्तां मा न्यपतदधः । तदनु हरिणा समाहितं संबोधिता सा विस्मयभयाकुलान्तरा तं निरीक्षमाणा चिरं यद्वदवागवस्थिता । क्रमेण मनोनन्दनाभ्यां शुश्रूषिता रामदासेन च सावधानं बोधितयाऽऽयास्याः शनैः शनैः स्वास्थ्यमवाप सुनीतिः ।



॥ श्रीगणेशाय नमः ॥

# १२. निशीथवलिः

निशीथिन्यवमितप्राया । साहिबजादा-इब्रिबल्ताखाम्नः कस्यचिन्मुस्लिमाभिजातस्य श्रीलस्य सुरतनामनगरनिवासिनः सौधस्य मुखशाला पूर्णान्धतमसावृताऽऽसीत् । नीलवर्णकार्मिकक्षौममयजवनिकाभिर्नैकभीषणपित्तलमूर्तिभिश्च सा दिवापि निरानन्दा रात्रौ च विविधाकारमञ्चसञ्चयेन शवपेटकसमूहयुक् स्मशानभूरिव भयानकालोकं भेजे । तेष्वेकस्मिन्मञ्चे श्रीलस्यात्मजा जुलेखाभिधा सोत्कण्ठं कमपि प्रतीक्षमाणोपविष्टासीत् । प्रत्यासन्नविंशतिवर्षा पुरातनमोगलसाम्राज्यकालीनैश्चित्रकारैः करिदन्ते आलिखितानां रमणीनां चित्रेभ्योऽपि रमणीयतरा, मृणालगौरी, कुन्दकोरकाग्रदन्ती, नवनीतकोमलत्वग्छविः शशिकलेव नवयौवनारम्भपक्षाङ्किता, प्रवालाधराऽऽयतपक्ष्मान्तच्छादितदेदीप्यमाननयनयुगला, शोभनसान्द्रनीलकुन्तलालकमण्डितचारुशीर्षका बालिकेयं विनोदाभिलाषित्वमात्मनो नयनापाङ्गविभ्रमेण सलीलस्मेराननेन च स्पष्टीकुर्वती । स्वाभिजातोचितं सगौरवमाचरन्ती प्रगल्भा चाल्पवयस्काऽपि वाक्पटुर्विकम्पिताब्जवदना सोत्साहा नितरां मोहिका सर्वथाऽभूत् । जन्मतो मातृहीनायाः पितुर्लालनामृतसुखं न कदापि निरवेशि तया । धनाढ्योऽयं पिताऽस्या हि दिवा द्यूतादिकलाकलापपारगैः सहचरैर्विनोदितहृदयो नक्तं च वाराङ्गनाभिर्नृत्यसङ्गीतादिविलासनन्दितोऽवधूतकन्याकाचिन्तनःकालमयापयत् । जन्मन एव प्रभृतीयं पुरातनवृद्धपरिजनस्य गेहिन्या लालिता पोषिता च । शैशवे केनचन परिणतवयस्केनाध्यापकेन प्रापितप्राथमिकमातृवाक्शिक्षा ततश्च कयाचित् सुज्ञयाऽऽङ्ग्लदेशीयाऽधिगमिता सकलाङ्ग्लिलिपिज्ञानं क्रमेण च वाचनलेखनादिनैपुण्यं काव्येतिहासभूगोलशास्त्रपाटवं चित्रकलादिचातुर्यं, पाश्चात्यसङ्गीतकौशल्यं प्रसिद्धपाश्चात्यकथाख्यायिकाग्रहणपाटवं च । सकलमिदं शिक्षणं सम्प्राप्यापि विशालसौधे पितुः प्रतिपन्नपुरातनरूढेः कन्यान्तःपुरे बन्दीव निरुद्धसर्वबहिःसंस्कारा कथमपि कालमगमयद्बालिकेयम् । अत्रान्तरे तस्यामाङ्ग्लाध्यापिकायां कार्यवशात्स्वदेशं गतायां जुलेखाया विविक्तं शून्यमगमत् । परिणतवयोवशादन्धीभूता तस्या धात्री, धात्र्याश्च स्थविरपतिः, तयोश्च सुतमुस्मानाभिधमन्तरेण न कोऽपि कुमार्या दृक्पथमगात् । समानवया उस्मान् सार्धं तया पोषितो मातृवाचि चाध्यापितोऽनुमोदितकन्यान्तःपुरप्रवेशोऽप्याङ्ग्लाध्यापिकया तत्साहचर्यं न कदाप्यनुमोदित आसीत् । अपरं च सम्भ्रान्तपाश्चात्यशिक्षणायै दारिकाया अपि भृत्यकल्पस्य तरुणस्यास्य साहचर्यं न भृशमभ्यरोचत ।

अथाङ्ग्लाध्यापिकाया निर्गमादारभ्य जुलेखयात्रैनस्तरलतरलतां प्रापत । न सङ्गीतं न वा पठनपाठनम्पा विनोदप्रदोऽभूत् । बाह्यजगद्दिदृक्षाचिन्तनेनैव दिवानिशं सा गृहीताऽभूत् । कथं नाम स्वेच्छया पर्यटितुं प्रभवेयमिति प्रतिक्षणं प्रादुरभूदभिकाङ्क्षा तच्चेतसि । अत्रान्तरे तत्पाणिग्रहणसंधानं कस्यचिद् देशान्तरवासिनः श्रीलस्यात्मजेन चिरा निश्चितं श्वश्रूश्च मासाभ्यन्तरे सुरतपुरमुपस्थास्यतीति श्रुतं जुलेखायाः श्रवणपथं कटु न्यपतत् । अनवलोकितमनस्केन सार्धं पाणिग्रहणमनिच्छन्ती बालिकेयं व्यतिकरमिमं निवारयितुमनेकोपायान् व्यचिन्तयत् ।

अथ सायमेकदा वातायनोपकण्ठगतां बहिरवलोकनपरां तामुस्मान् धान्याः पुत्रो नवयौवनचुम्बितशरीरो वर्णेन गौरः प्रचण्डबाहुदण्डः सुनद्धस्नायुः समुपेत्य विदिततन्मनोरथोऽब्रवीत् ।' भर्तृदारिके, आज्ञापितोऽस्मि स्वामिना कृतवाङ्निश्चयस्य वरस्य ते पुरं गत्वा सह वरयात्रया निवर्तस्वेति । तस्मात्प्रातस्तरां श्वः प्रस्थास्ये' । इत्याकर्ण्य झुलेखा क्षणं विमृश्याब्रवीद् 'अहमपि गृहनिर्गन्तुकामास्मि । अपरिचिततरुणेन सह विवाहाद्वरं मरणमपि । को जानाति कीदृशः स्यादसौ । प्रायः पङ्गुः, प्रायः स्थविरो गलितजः, प्रायोऽन्धोऽपि स्यात् । उस्मन्, नय मां सहात्मना । क्वचिन्मार्गे विसृज्य मां निर्दिष्टस्थानं प्रति व्रज । भद्रमुख, बहूपकृता भविष्यामि ते । सर्वाभरणानि चान्मनस्ते वितरिष्यामि' । इत्युक्तो युवा प्रत्युवाच 'किमिति भवीपीत्थं विवाहात्पूर्वमपि' । झुलेखा प्रत्यवदत् ' पाणिग्रहणमेतत्प्रतिहनिष्यास्येव । अलं पञ्जरनिवासेनात्र । श्वासनिरोधकेन जीवनेनात्र प्रहतास्मि खलु । मदीयभूषाजातेन भूरिधनमधिगमिष्यसि ' इति ।

अथ तदुस्मान्दोलितमानसमालोक्य पुनर्लोभयितुमुपाक्रंस्त सा । ' अथवा स्वातंत्र्यं यदि मे दीयेत तर्हि तवापि भार्या भवेयमि'ति कलमधुरप्रलापिन्या व्याहृतं कालतन्त्रज्ञया झुलकया । तदाकर्ण्य युवको विस्मयेन स्तम्भित इव प्रत्युत्तरमदत्त्वा क्षणं यावद्वद्धवाक् स्थितः । पुनश्च मधुरगिरा तस्याः प्रणुन्न इवानङ्गविकारेण स्पृष्ट इव च प्रफुल्लाननः प्रत्यभाषत । ' भर्तृदारिके, सम्भावितोऽस्मि किल भवत्याः कृपाकटाक्षेण । निरन्तरमेव भवत्याः सेवापरः स्थास्यामि ।' इति मुकुलितहस्तः प्रतिश्रुत्य ससम्भ्रमं पुनरब्रवीत् । " निशीथेऽद्य बलीवर्दयुक्तशकटं सौधस्य बहिः सज्जं कारयिष्ये । भवती सर्वाभरणवसनादिजातं सङ्क्षिप्यात्रैव प्रतीक्षतां माम् ' । इत्युक्त्वा सप्रश्रयं यथोचितं द्वारिकार्ये परिवारमभिवन्द्यापासरत् ।

अथ परिजनेनानुपलक्ष्यमाणा झुलेखा सङ्क्षिप्य समस्तमहार्हरत्नखचिताभरणजातं रुचिररुचिराम्बरनिकरं च पेटिकायां सम्पुटीकृत्य भाविस्वातन्त्र्यलाभमुत्प्रेक्षमाणा कन्यान्तःपुरतो विमुक्तिमात्मनश्च हर्षेण, विविधभावभङ्गिभास्वरवदना पुलकिताङ्गी बभूव । अथ ग्रामादेऽस्मिन् निशीथिन्यां निर्मक्षिकं जाते तरलतरलचित्ता स्तोकनादेनाप्यस्वस्था यद्धदृष्टिश्च स्थितवती । ततः समुत्थायाभ्यगमत् सा पित्तलमूर्तेः सविधे कालिकादेव्याः पुराणमूर्तिमात्रैकहेतुना रक्षितायाः । निरीक्षमाणा तद्भास्वराक्षियुगलं मुखाद्वलम्बमानां च तज्जिह्वां क्षणं जोषं तस्थौ । मोहितेव यावत्सा मुहूर्तं निश्चला तिष्ठति तावदनुपलक्षितस्तत्पृष्ठतः प्रादुरभूदुस्मान् । मन्दं मन्दमुद्घाट्य द्वारमुत्तमपदेन प्रविश्य च प्रकोष्ठं झुलेखाया अंसं समार्दवमस्पार्क्षीत् । स्पृष्टमात्रायास्तस्या मुखादुद्गतमीषत्क्रन्दनम् । 'सावधानम् । मा कार्षीर्निद्राभङ्गं सुप्तजनस्य' । इति कर्णेऽजपत्तस्या उस्मान् । प्रियदर्शनस्तरुणोऽयं सन्नद्धगात्रः शुभ्रवसनानद्धकटितटाधोवसनो दृढाजानुदीर्घकृष्णवर्णकञ्चुको निहितशिरोभागोऽन्तुरुष्कोष्णीषः प्रगल्भं कुमार्याः सम्मुखीनस्तस्थौ ।

झु०— अरे कियान् विलम्बः कृतस्त्वया । चिरात्प्रतीक्षमाणया मयामन्यत यत्त्वं नायास्यस्येवेति ।

उ०— अपि सिद्धाऽस्ति भवती प्रस्थानाय ?

सु०—(सशिरश्चालनं तयेति सूचयित्वा) अपि पितृचरणा निवृत्ता गेहम्?

उ०—घटिकार्धं व्यतीतं तेषां गृहानभ्यागतानाम्। परिषेवितोष्णदुग्धैस्तैर्निद्रासुखमनुभूयतेऽधुना। नास्ति मक्षिकापि जागरितेदानीम्। आगम्यतां शीघ्रम्।

इत्युक्त्वा विद्युदुल्काप्रकाशेन कातराभ्यां नेत्राभ्यां परितोऽवलोक्य द्वारं प्रति गमिष्यन् सहसा स्मरन्निव—

उ०—अपि भवत्याऽऽभरणानि गृहीतानि।

सु०—(निजचोलं निर्दिश्य) निःशेषं सर्वमपि मयापहृतम्। (ततश्च चाटुवचसा) सखे, प्रतीक्षस्व क्षणं तावत्। तातपादानां मुखमन्तिमवारं द्रष्टुमिच्छामि।

उ०—मैवं मैवं क्रियताम्। जागरिता भवेयुश्चेत्स्वामिनस्तदा सर्वोऽपि सङ्कल्पोऽस्मदीयो निष्फलोन्मुखत्वमापत्स्यते खलु।

इति तस्यै विज्ञाप्याधीरं सहस्तनिक्षेपमुत्स्मात् सावधानं पुरः प्राचलत्। सुलेका तावत्तन्निर्देशं प्रतिपद्यान्धकारे समनुयाती सुखशालाया मध्यभागे चित्रकाचमयकोरानिवेशितं प्रकाशचित्रं स्पृष्ट्वा जनकस्यात्मनस्तत्पुरतः क्षणं स्थित्वा—

सु०—तात, स्वपिहि। तव स्थविरस्य विश्वास्यपरिचरस्य सह सुतेन पलायितां मामधिगत्य किन्तु वक्ष्यसि।

उ०—आगम्यतां शीघ्रं घटिकाधिकं हि यानं प्रतीक्षते।

प्रवर्तितैवं तदाज्ञानुसारिणी बालिका युवकद्वितीया सुखशालां निःशब्दं विसृज्य सौधाभ्यन्तर्गतं निभृतमतिक्रम्योद्यानमासाद्य च विशालवटतरुच्छायायां स्थितं शकटमुपेतवती। अवलोक्य तदपूर्वदृष्टं यानं संयुक्तघण्टानेकस्वर्णगुटिकामण्डितबलीवर्दं सुलेका सकौतुकमवादीदुच्चैः 'आः! बलीवर्दयुक्तं यानम्।' इति सोत्साहं समुदीरितवतीं तां शकट उपवेश्य जवनिकाश्च सर्वा निपुणमाकृष्य पश्चादधः प्रविश्य ■ स्वयमुत्स्मात् मुखमार्यं सारथिं 'यावच्छक्यं बलीवर्दद्वयस्य तावच्छीघ्रं गम्यतामि' त्याज्ञापयत्।

अथ निखिलनिशायां यानेनानेन प्रचलन्तौ तौ पञ्चयोजनमध्वानमाप्रातरभिजग्मतुः। इतिपरो गुर्जरदेशोऽयम्। अत्र मार्गो शुष्कतृणराशीन्, जलयन्त्राणि, शालिक्षेत्राणि, पीतसर्षपमण्डितप्राचीराणि च प्रथममेव दर्शं दर्शं सुलेकायाश्चेतः प्रमोदतुन्दिलमभूत्। प्रदेशस्य रामणीयकं जवनिकाच्छिद्रतोऽविरतं निरूपयन्ती सा जोषमेव स्थितासीत्। मन्दसुरभिशीतलानिलः स्वगृहस्य जुगुप्सावहवाताश्रितान्तर्व्यनिरिक्तो विविधभावनाभिस्तां पर्यपूरयत्। अन्तरिक्षस्य मोहकं परिवर्तनमास्फुरत्पाटलवर्णोऽथीलमगेरानीलवर्णे तद्दृष्टिमगृह्णात्। शाद्वलेभ्यो दोहनवेलाशंसी हम्भारवो गोगणस्य समाकर्णि। धेनूनां गुरूधांसि निरातानि धवलपयोबिन्दुक्षालितभूतलानि जङ्गमवाल्मीकान्त वालुकापूरितभस्त्रा इव।

सु०—(सविस्मयम्) अहो! अदृष्टपूर्वरमणीयत्वं प्रदेशस्यास्य।

उ०—मा द्राक्षीरतिदीर्घम्।

इति तां निर्दिश्योत्स्मात् दर्शा प्रापारयत्।

सु०—(चाक्षलोकं पराहृष्टिः) कुतो भीतोऽसि।

उ० —( सुलेखायाः सुपमसुखपार्श्वदृष्टिः मन्दस्वरेण ) को जानीते किं घटेतेति । पञ्चयोजनमात्रदूरं सुरतपुरादागता वयम् ।

सु० — मत्पलायनवृत्तमुपलभ्य किन्तु करिष्यन्ति तातचरणाः ।क्व वक्ष्यति धात्री तव जनकश्च । अहो दिनाद्दिनं, मासान्मासं, वत्सराद्वत्सरं भित्तिचतुष्टयावृते प्रकोष्ठे तातपादानां प्रासादे बन्दीवासस्य वैकल्यम् । प्रकाशानिलस्वातन्त्र्याभिलाषिण्या कथमियान् कालो मया नीत इति न जाने ।

अदत्त्वा प्रत्युत्तरमुस्मात् पुरो गत्वा तस्याः करपल्लवं स्वहस्तेन ग्रहीतु मायतन । परं तं निवार्य निपुणं सविरोधं च सा व्याहरत् ' मैवं मैवमि 'ति ।

उ० —(कामपरवश इव ) प्रिये न विरावय पाणिं ग्रहीष्यामि ।

भवत्योत्तरं सुलेखा सविरोधविक्षेपं सं सविनोदं क्षणं न्यरूपयत । ततः

सु० — क्रियमामाप्यलभ्यत मयानुभवितुं सर्वमिदं मन्दशीतलसुरभिसमीरणसुखं स्वातन्त्र्यपरमानन्दश्च । अपि मामन्यत्सुरपञ्जरे निरोत्स्यसे ।

उ० — नहि नहि, गगनविहारिणीं राजहंसीव स्वातन्त्र्यदिव्यसुखमुपभोक्ष्यसे । जगत्सुललनाकुलललामभूता त्वमपूर्वसुखातिशयभागिनी भविष्यसीति प्रतिजाने ।

इति गम्भीरवचसा साभिनिवेशं शपमानो विततशरीरो निजानुरागं तस्यै प्रदर्शयितुं प्रावर्तिषोऽस्मात् ।

सु० — नैवं नैवम् । मा कार्षीरनिष्करणमिदं यावन्निर्दिष्टस्थलं नाभिगतावावां निर्वर्तितोद्वाहौ च ।

उ० — त्वत्करकमलस्पर्शानन्दमात्रं दीयतां मे । अपि न बाल्यात्प्रभृति समभावाभ्यां क्रीडितम् ?।

सु० —( सोत्तरपरिहासम् ) अपि न विचित्रं यन्निहितयानेनापि मम बहिर्विहाराय गमनं निषिध्य स्वयमेवाः कन्यान्तःपुरे तातपादैरनुमोदित इति ।

उ० —( स्वमसृणकुन्तलकलापं हस्तेन परामृशन् ) परं विदितमेव भवत्या यदामामेकस्मात्तुः पयः पाययित्वाऽऽदीरावाभलालित सर्वं पोषितौ लालितावध्यापितौ च विश्वसनीयपरिजनस्यात्मजोऽस्मीति ।

सु० — इत्यमेवोक्तं पितृचरणैरन्येद्युः । किमिति युवयोरुभयोर्विषये विप्रतिषेधः क्रियते ' इति पृष्टैस्तैः प्रत्युक्तम् " कुमार उस्मान् सर्वं त्वया पोषितोऽध्यापितश्च । तत्वलकश्च संशहीनोऽस्मत्कुले पञ्चाशद्वर्षाधिकमपि सेवमानोऽप्यविश्विक्तोऽस्मच्छरीरादि "ति ।

निशम्येतत्तस्वस्यानने व्यलमत्सन्तोषजनितं स्मितम् ।

सु० — नाविदुः खलु पितृपादाः कियन् प्रगल्भत्वं जातोऽसीति ।

एवं सविनोदमुक्त्वा समीपवर्तिन्या मञ्जूषाया आम्रफलमेकमादाय तद्रसमास्वादयितुमारब्धवती । यानं तारत्राचलच्छनैः शनैरविरतम् ।

'आर्ये, आगम्यतां तावत् । परिधानेत्तरमपेक्ष्यते भवत्या । क्वास्ति भवत्याः पोटलिका' । इति स्थविरया पृष्टे पुर उपसृत्य युवत्यै तां समार्पयद्रुस्मान् । कुञ्चिताक्षी वृद्धा सञ्जात-कुतूहला गृहाभ्यागतां क्षणं निरीक्ष्य सुलेखां तमोमयपृथुसोपानपङ्क्त्या प्राङ्गणोपरिष्टादीक्ष्यमाणं प्रकोष्ठमनैषीत् । तत्र कोणस्थाया विपुलायाः पिचुलोत्कीर्णपेटिकाया उपरि चीवरनिकरोऽव्यवस्थोऽदर्शि । मध्यभागे च प्रकोष्ठस्य भूतले तस्थौ ह्रस्व एकतूलिकाविहीनो मञ्चकः । 'अकिञ्चना वयं परं कुत्रोपाऽऽत्मीयेनि मन्यतां भवत्ये'ति विरचितसमुदाचारया वृद्धया व्याहृते सुलेखाऽभ्यधात् । 'अहो स्वर्गीयमिदं स्थलं खलु । न विजानाति भवती कियत्सर्वमेतत्सुखावहं म इति । क्षेत्रवृत्तिरियं पवनप्रकारास्वातन्त्र्यान्निविराजिना...' इत्य-र्धोक्ते विरम्य शालीनतया तरुणी तूष्णीमेव च स्थित्वा मन्दस्मितमकरोत् । ततश्च सद्योऽपनीतस्विन्नोत्तरीयां तां जरद्य साकुञ्चितनयना पुनर्निरीक्षमाणा क्षणं तत्रैव चिरायिताऽवादीत् । 'भवती श्रान्तास्ति शयनेऽस्मिन् विगतश्रम आस्या क्रियताम्'इति । शनैरपासरच्च ।

तदनु सुलेखयाऽव्यवस्थितया घटिकाधिकं निद्रासुखं निरवेशि । ततश्चार्धजागरितया तया परितः साक्रोशं सफूत्कारं मरुद्रुतं सवृष्टिपूरस्पटपटाशब्दमश्रूयत । प्रबुद्धायां च तस्यां प्रवर्षणे विरते गवाक्षतोऽदर्शि रुचिरेन्द्रायुधमिन्द्रनीलनीलाम्बरतले । अथ शनैः शनैर-दर्शनतामुपगतस्य भगवतो गभस्तिमालिनः कश्मीरजवर्णरश्मिनिकरः क्षणमात्रं गवाक्षेतर-जालेभ्यः प्राविशत्प्रकोष्ठे । अधःस्थे प्राङ्गणे कृषीवलोऽभिधेनुकागेजनव्यवसाये तदीयपत्नी च सायन्तनिरुभोजनाय दधिमन्थने व्यापृतावास्ताम् । तयोः परस्परमालपतोः स्वरध्वनि-रश्रावि स्फुटमूर्ध्वकोष्ठे । अथ झटिति सुलेखा मञ्चकादुत्थाय ह्रस्ववातायनोपकण्ठमुपेत्य च प्राङ्गणे पदृष्टिर्मुहूर्तमवातिष्ठत । तत्क्षणे कृषिको दीर्घनालिकया तमाखुपानं सगुडगुड-शब्दमाध्मातुं प्रावर्तत ।

स्थविरा—न तथा युवकस्य धर्मपत्न्या भाव्यम् ।

तमाखुपाणोदके गडगडनादं कुर्वन्ति सचिन्तं'कृषीवलउ एकहुन्वलक्ष्मश्रु दक्षिणेतर-पाणिना समीकुर्वाणोऽभ्यधात् । 'कुतो यवनपुरोहितमन्त्रेद्रु स प्रयाणः स्यादिति सन्देहात्स्वं मधेत' इति ।

अथ संलापे विरते वृद्धदम्पत्योः प्रदोषसमये प्राङ्गणं तत् कथमपि भयानकं जिह्मं ■ प्रयमारण्यं । दधिमन्थनस्यानवरतमन्थररवान्तरान्तराऽश्रावि दविष्ठमस्जिदस्या-लिन्दतो यवनपुरोहितस्य शोकमयस्वर अल्ला इल्लीलेति । क्वचित् क्वचिच्च देवमन्दिरयो नेदीयसो घण्टानादोऽपि श्रुतिगोचरोऽभूत् । मस्जिदतो ध्वनिपरम्पराश्रवणेन विलक्षणप्रकारे-णोद्दीपितेव सुलेखा वातायनान्तरमभ्यगात् । तद्गतायास्तस्याः कस्यचन स्थानीययवनसाधोः समाधेरन्तिके सम्मिलितो जनसन्दोहो दर्शनमयासीत् । समाधिं हरिद्वर्णसूत्रपटिकाच्छादित-शिखरं परितः स्थितेषु महीरुहेषु भास्वत्पीतहरिद्वर्णध्वजमुखयो दिवंगतसाधोर्महोत्सर-प्रमङ्गादहुमहस्याकर्मनर्त्वः समरिंतो व्यधूनोत् । अथ प्रोत्साहातिशयपरिस्पन्दमानां ग्रामटिकं दर्शं दर्शं सुलेखा समुत्कर्षेण स्फुरयादिक्य गवाक्षतः परावृत्य सपदि सोपान-

पङ्क्त्या प्राङ्गणमवारक्षत् । तत्र च कृषिकस्य गेहिनीं दधिमन्थनविधौ व्यापृतां क्षणं निरूप्य प्रसार्य च करपल्लवौ मन्दस्वरेण तामभ्यधाद् 'दधि मन्थितुं जनोऽयमनुमन्यताम्' इति। तद्वचः श्रुत्वा सविस्मयं स्थविरयोक्तम्। 'कुतो नु वसितरुचिरदुकूलां कुसुमसुकुमारां तनुं श्रमयितुं प्रवृत्तास्ति भवती'ति।

सु० — (साभिनिवेशम्) पार्यते मयैतन्न वेति पश्यतु भवती।

इत्यभिधाय दधि मन्थितुं प्रारभत सुलेखा। शनैः शनैः काष्ठमयदले नवनीतकणा हिमकणा इव प्रादुरभूवन्। 'अपि चतुरासि दधिमन्थने न वे'ति चाटुवचसानुयुक्ता दारिकया स्थविरा कम्पितशिरा जोषमस्थात्।

सु० — (सकुतूहलम्) अप्येष गोगणो गोष्ठके भवदीयः।

स्थविरा — अथ किम्।

सु० — अप्यत्रैवोत्पाद्यन्ते दधिनवनीतघृतादीनि। (सविस्मयम्) अहो जीवन-सौकर्यं क्षेत्रजीविनाम्।

कृषिकः— (सगौरवम्) गोधूमादि धान्यं शाकाद्यपि।

सु० — अपि साहाय्यार्थं भवद्भिः सहकारिणो नापेक्ष्यते?

कृ० — आसन्नत्र त्रिशः सहचर्यः परं मासात्पूर्वमस्मद्दुहितुर्महामारीव्याधेर्भयात्सि-ष्यन्तास्ताः सर्वाः।

सु० — भवद्भिः कर्मकरीपदे नियोजिता चेदहं सर्वमपि विधातुमत्र सज्जाऽस्मि।

स्थ० — सूक्ष्मदुकूलाम्बरधारिणी कथं कर्मकरीवत् प्रयसितुं प्रभविष्यति। अपि नीलोत्पलपत्रधारया शमीलता छेत्तुं पार्यते?

सु० — दुकूलवर्गः किम्। नावश्यकं तानि परिधातुम्। विमलपवन एवा-भिलष्यते मया।

स्थ० — कामं विमलपवनः परं परिश्रमः? (निचोत्तरीयं दर्शयन्ती) ईदृग् वस्त्रं परिधेयम्। (सविनोदम्) अपि चलिष्यसि पृष्ठतो गोगणस्य।

सु० — (सस्मितम्) अहो मन्दप्रभाभास्वच्छेशराणां रमणीयत्वम्।

स्थ० — (युवतीं ससन्देहं निरूप्य) अपि परिहासाय मदीयोत्थम्?

सु० — भद्रे! नहि। अत्रैव निवस्तुमिच्छामि।

भयानकक्रन्दनमश्रावि सहसा। क्रमेण पवनौघोपशमेन सार्धं तद्रुदितमपि व्यलीयत। सुरालयस्य घण्टाघोषे विरते जनसमूहे विकीर्णे च निद्रितग्रामटिकेयं शवाच्छादनपटाच्छादितेव स्थिता। झुलेकापि क्रमेण गृहीताऽभूच्छिद्रादेव्या।

अथ निशीथे सहसा स्वप्नाज्जागरिता सोपानद्वारोपरिगतविचित्रच्छायया सम्भ्रान्तेव शयनादुत्थाय सा परितोऽवालोकयत्। परं कृष्णपक्षस्य क्षीणप्रकाशे न किमपि दृष्टिगोचरमभूत्। प्रतिभास एव मे स्यादिति सस्मितं सञ्चिन्त्य मञ्चके पुनरशेत। परमल्पक्षणोत्तरमधःस्यप्राङ्गणे स्थितयोः स्वरध्वनिर्वृद्धदम्पत्योर्न्यपतत्तत्कर्णरन्ध्रकुहरम्।

स्थविरा —कच्चिदसिधेनुका ते निशितेदानीम्।

कृषिकः —अलमस्त्युपलमपि कर्तितुम्।

स्थ० —परेद्युरप्येवमेव कथितं त्वया तथापि तस्या ग्रीवाच्छेदसमये तदाक्रोशो घोरतमो व्यश्रावि।

कृ० —तत्पुनरेकवारं तां तेजयिष्यामि।

इति संलापं समाकर्ण्य विस्फारितनयनाऽन्धतमसे प्राङ्गणमवेक्षितुमपारयन्ती संवादस्यैकैकं शब्दं श्रोतुं सा प्रायतत। शाणस्य कर्कशघर्घरनादेन भयाक्रान्ता पुनः पिहितवातायनसमीपमुपेत्य रन्ध्रैरेकतानेन निपुणं निभृतं निरीक्षितुं प्रायस्यत।

कृ० —आदौ द्वयोः कतरस्य शोणितोपायनेन कालिकादेवी प्रसादनीयेति ब्रूहि।

स्थ० —प्रथमतो नार्यास्तावत्। तस्या देहबलिदानेन प्रसन्ना भविष्यतीति न सन्देहः।

कृ० —परमतिकृशाङ्गी सा। द्वितीयस्याधिकं मांसमुपलप्स्यते।

इति श्रुत्वा झुलेका सवेपथुरतस्थौ।

स्थ० —नहि नहि। प्रथमं गृहीष्यावस्ताम्।

तदनु दम्पत्योर्वादविवादोऽधिकाधिकं व्यजृम्भत। झुलेका च तावत् स्विन्नललाटस्थला कम्पमानाङ्गयष्टिः पतनोन्मुखी सन्त्रासाकुलापि मुखोद्गतक्रन्दनं कथमपि न्यरुद्ध। पर्यन्ते विविधभीषणवितर्कपरम्परावशीभूता निपातितजानुः स्तब्धश्वसना दम्पत्योस्तयोः संलापस्वरं मन्दीभूतं शृण्वती गोशालासमीपे भुक्तसुप्तस्य स्वसहचरस्यात्मनो वा संहारो न चिराद् ध्रुवं सम्भविष्यतीति प्रतीता लिखितेवोत्कीर्णेव स्तम्भितेव तस्थौ। विरते विचारे वृद्धदम्पत्योः पितृवनसंवादिनी निःशब्दता व्यराजत सर्वत्र।

शनैरबुद्धिपूर्वं च झुलेकाऽऽत्मानं मञ्चोपकण्ठमाकृष्य विस्तारितकरपल्लवा समुत्थिता ततश्च घूर्णमाना पदे पदे स्खलन्ती पुटीकृताङ्गी शयने निक्षिप्तदेहयष्टिः प्रह्वीभूय सधडधडकम्पमानहृदया निःशब्दं क्रन्दन्ती स्म तिष्ठति। तदनु सोपानपङ्क्तेः शिथिलितकाष्ठमयफलकानां संवृत्तस्तोकस्वनेन सन्त्रस्ता सोपानद्वारमनर्गलमर्धविवृतमियतमस्तीत्यस्मार्षीत्सा। तन्मार्गेणैवं चिकीर्षुः कस्यापि हस्तेन गृहीतकण्ठमिवात्मानं विभावयन्ती द्विगुणाभिहतेव स्तम्भितगात्री धीरधौरेयापि विधुरितधैर्या युगतुल्यं क्षणमगमयत्। न चिरादकाण्डोत्पन्नकर्णध्वनिरतमिस्रायां निःशब्दतां व्यच्छिनत्। ततश्च संघातध्वनिरश्रावि। आर्तनाद-

माकर्ण्य किमप्यकृत्यमनुष्ठितं स्यादिति विद्रान्तरङ्गा भयोद्रेकपिञ्जलाऽऽक्रन्दितुमिच्छन्त्यपि रुद्धकण्ठा स्थितवती सा । "हा हा सहचरमुष्मान् कृषीवलस्यासिभुजङ्ग्या कथावशेषं कृत्वा तदीयशोणितं कालिकाया रूपन्मूर्त्यै पापण्डजनेनानेन देवताभिमताया महोत्सवप्रसङ्गादुपायनीकृतं स्यात् ।" इत्यविरतं विभावयन्त्याकुञ्चितपिण्डीभूतविग्रहा सितोत्पलानना विस्फारितनयना कथमप्यनन्तक्षणमिव क्षपां क्षपितवत्याभानूदयम् । समये तस्मिन् कृतदीर्घदुःस्वप्नजागरणया तया शुश्रुवे ताम्रचूडकानां ध्वनिनादः कुटीराद्विदूरात् कस्यचिद्गोपालस्य तन्वीनादो गोगणहम्बारवमिश्रः । क्रमेण मञ्जिष्ठसूत्रे पाटलवर्णलुप्त्यां विलसन्त्यां झुलेका परिधाय वेषमात्मीयं, समुद्धृत्य च पोटलिकां स्फुरद्वक्षःस्थला सोपानपङ्क्त्या सत्वरमवारुक्षत । प्राङ्गणे कृषीवलस्य समं गेहिन्या मन्दमन्दस्वरेणालपतः समीपे लम्बमानां शाणकन्थां भूतलं शोणितपूरेण प्लावितं चालोक्य 'कथं नाम जनोऽयं निष्ठुरो व्यतीतरात्रौ कृतघोरकृत्यः शान्तं शान्तं संलपेदि'ति चकितचकिता भीतभीतेव युवतिरवर्णनीयजुगुप्साभिभूता पदमेकं पुरश्चाचलत् । आलोक्य तां स्थविराऽब्रवीत् । 'एहि तावदारभस्व दैनिककार्याणि'ति । झुलेकां जोषं स्थितां वीक्ष्य पुनस्तां संबोध्य प्राह स्म जरठा । 'गृहाण कर्तरीमिमां प्रक्षालय च ताम् । किमिति भिस्त्रित्तिरसी'ति । कर्कशमेवं भाषिता झुलेका निरुत्तरेति सोपहासं कृषीवलेनाभिहिता । 'कुतः सूक्ष्मदुकूलवासांसि पुनः परिहितानि भवत्ये'ति । 'इतःप्रस्थास्यतेऽद्य मये'ति झुलेकाया वचो विगणय्याक्रोशत्स्थविरा । 'खण्डशो विदारयिष्यसि परिधानमिदम् । अभ्यरान्तरं परिधाय दोहनं विधेहि' । इत्यभिहितामपि निरुत्तरां तरुणीं सूक्ष्म निरीक्ष्य पुनः सा प्राक्षीत् । 'अपि सुखं न निद्रितासी'ति । 'नही'ति झुलेकयाऽर्धोच्चारितं वचः पुनस्त्वरीयं 'प्रक्षाल्यतां क्षिप्रमसिपुत्रिकेयम् । महोत्सवदिनेऽस्मिन् प्रातरेव कालिकादेव्यै मेषस्यास्य बलिदानं विधेयमस्माभिर्मतानुसारेणे' ति ।

कु०—(सोपहासम्) प्रायोऽस्मद्वादविवादेन गतरात्रौ भवत्या निद्राभङ्गः समजनि । अजहल्यां चिकीर्षुरासं परमआहननमैच्छन्मम गेहिनी । तथापि पर्यन्ते स्वाभीष्टं साधितं मया ।

समाकर्ण्यैतत् तरुणी सम्प्राप्तसमाधानसुखा दीर्घमुच्छ्वसन्ती गोशालास्तम्भमवलम्ब्य विनोदहर्षाश्रुपूरप्लाविता प्रोच्चकैः प्रजहास । तद्विनोदकारणमनवगम्यैपस्कुपितेव 'किं संवृत्तमि'ति पप्रच्छ वृद्धा । 'न किमपि । वेषान्तरं परिधाय शीघ्रमेवायास्यामी'ति मृदुगिरा निगद्य प्रति सोपानमधावद्बालिका । सोपानस्यावतरणस्थले युवकमालोक्य सहसा विरतगतिः सा पुनः प्रोच्चैर्जहास । पृच्छापूर्वकमवलोकयन्तमुत्सानमभ्यधाच 'अन्यथा मया भवितव्यम् ।'

उ०—आः ! अन्यया न चिराच्चिन्तयिष्यसीत्यहासयेव ।

झु०—नैवं नैवं । वेषपरिवर्तनम् ।

इत्युक्त्वा तस्मै सहस्ताक्षेपं स्वस्तीति निर्दिश्य झटिति झुलेका स्वनत्सोपानमालामारुक्षत् ।

॥ श्रीगणेशाय नमः ॥

# १३. 'मत्स्यजीवी केवलम्'

प्रारब्धस्य द्वितीयमहायुद्धस्य मासद्वयं व्यतीतमासीत् । विषमे कालेऽस्मिन्न-संस्थानयान्त्रिके उच्चशिक्षणार्थं स्वदेशान्निर्गतो मातृहीनस्यैकाकिनो मदीयात्मजस्य कथमवमन्यत मयेति नितरां खलु विस्मयेऽद्य । न चिरादनुतापेनादन्दह्यत हृदयं हि मे । तथा हि । द्वित्रदिनापगमे पुत्रस्य निर्गतस्याऽऽदननामकद्वीपान्नातिदूरं रक्ताभिधे सागरे नौका भग्नेत्युदन्तो दारुणो मम कर्णपथे न्यपतत् । परं कति पान्थास्तिरोगताः कति चाभिरक्षिता इत्यवगन्तुमशक्यप्रायमभूत् । सप्ताहमेकं च वर्षसहस्रायमाणं नरकयातनामयमिव चिन्तावेदनावडवानलमदशामिवोत्पन्नखिन्नः सन्देहवह्निमालाजालैः प्लुष्टहृदयः कथं कथमप्यगमयम् । गलत्तमोमयपेटिकायां बन्दीकृतो मधुकर इव संशयान्धकारे सुतस्य पारमार्थिकं वृत्तं प्रतीक्षमाणोऽवसन्नगात्र इव स्थितवानहम् । परमगाधानुकम्पया परमात्मना रक्षितेषु पान्थेष्वस्ति मे पुत्रक इति वृत्तेन तत्पुनर्जन्मवृत्तेनेव सम्भ्रान्तः स्तम्भितः क्षणं निर्वीर्योऽभवं येन पुत्रचिन्तासन्तानैकतानस्य मे प्रतिपत्तिजडस्य परिस्थितिपरिवर्तनमवश्यमेव समजनि । परं क्व गन्तव्यं किं स्थलमनुकूलं स्यादिति यावद् व्यचिन्तयं तावद्विद्युत्सन्देशोऽभिनन्दनपूर्वकः केनचित्सुहृदा प्रेषितो मत्करतलमागतः ।

विंशतेर्वर्षेभ्यः प्राक् न्यवसमहं सह तेन कस्मिंश्चिद् ग्रामे रमणीये कोङ्कणदेशमण्डलनिवेशिते । मित्रस्यास्यालये समुद्रोपकण्ठेदग्रभूमौ निर्मिते कृतावासेन तदा मया तनयस्य मे जन्मवृत्तमाकर्णि । तदारभ्य स्थलमेतत्पुण्यक्षेत्रमिव मदीयेनापि हृत्पदमासीत् । तत्र च पुनरागमिष्यामीति सुहृदे प्रतिश्रुतमासीन्मया तदा । अद्यासौ प्रतिश्रवः सहर्षपरिप्लुतान्तःकरणस्य मम स्मृतिपथमायात् । अपरं च समये तस्मिन् कस्यचिद् दृश्यस्यावलोकनेन हृदयं मम षड्विंशं कालं करुणरसनिर्झरपूरेण प्लावितमासीत् । व्यतीतेषु वत्सरेषु विविधप्रसङ्गेषु व्यतिक्रान्त्यास्य स्मृतिपथात्त्रुटितेष्वपि तस्य मध्यवर्तिन्या अङ्गनायाः प्रतिमा सदैव विराजमानाऽऽसीन्मच्चेतसि । पयोनिधितटे चिरादृष्टोऽस्मिन्निरस्य स्मरणं कुसुमामोदभर इव मच्चेतसि पुनः पुनः प्रादुरभूत् । वसन्तसमये रसालतरौ विकसत्कुसुममञ्जरीभरस्य पुनरुद्गम इव व्यतिकरोऽयं यथाऽधुना साक्षाद्वर्तमान इवाभात् । तद्यथा ।

प्रचलत्सु पोतेष्वेकं निपुणं वीक्षमाणा सागरतटेऽवातिष्ठत् यावद् द्योतमानोदरेषु पयोधेर्बिम्बमात्रमिव सोऽदृश्यत। ततस्तीरं विहाय प्रचलन्तीं तामन्वगच्छं न चिराच्च ग्रामान्तर्गामिनि मार्गे तत्समीपस्थोऽभवम्। पृष्ठतस्तामवलोकयंस्तस्या सरलद्रुतगत्याऽनूढया बालिकया तया भाव्यमिति व्यतर्कयम्। निकटवर्तिन्यास्तस्या ऋजुभावशंसि वदनं तन्वङ्गयष्टिं च विलोकयतो मे तर्को दृढोऽभविष्यद्यदि तत्कण्ठे निर्वृत्तोद्वाहनिवेदकां मङ्गलसूत्रमालिकां नाद्रक्ष्यम्। अथावयोः प्रचलतोर्मध्ये स्वल्पिष्ठमात्रमन्तरमासीदिदानीम्। अतः स्फुटमालक्षितं मया यत्स्त्रीयायतलोचनयनलुगलेन नवयौवनसहकृतसौन्दर्येण चास्यैषा जितभूयिष्ठाभिजाताङ्गनेति। अथ क्षणमात्रं विरम्याप्यनि तन्मधुरस्वरामृतरसं पिपासुस्तामभवं 'तृषितेन मया जलमपेक्ष्यते। अप्यस्ति प्रपा क्वापि सन्निधौ'। इत्यभिहिता मया सा स्वगेहं मां निमन्त्र्य शीतनारिकेलरसः परिवेष्यतां श्रीमद्भिरिति साग्रहं प्रार्थयत। भृशं प्रमुदितोऽहं सादरं तन्निमन्त्रणं सपदि स्वीकृत्य सह तयोदचलम्। यथा प्रागेवावकल्पितं मया तथा तस्याः स्वरध्वनिमत्युत्कृष्टं मृदुलं च तद्वाक्सरणिं च माधुर्यं कुलाङ्गनावाग्विदग्धिनीमुपालभे। क्षणाद्विमोहितोऽहं तया पृच्छामकरवं यथोत्तरप्रदाने दीर्घं सा व्याहरन्ती मृदुस्वरेण मामानन्दयत्। कथितं च तया। 'मदीयशिशुर्ज्वराक्रान्तोऽस्ति। तस्यास्वास्थ्यकारणान्मत्स्यान्वेषणाय तस्य पित्रा ग्रामाद्बहिर्नाद्य गन्तव्यमित्यकल्प्यम्। डिम्भोऽयमेक एव तनय आवयोरि' ति। 'अभ्युपसेवेम भवन्त्या यावन्, अस्मि भिषगहम्। भवत्यानुमोदितो मुदा तं चिकित्सेयम्।' इति मयोक्तं द्रुतम्। सा च तदा कृतज्ञतापूर्वकं "नूनं खलु परमात्मनैव मदीयस्निग्धसुतस्य गणुनाम्नः परित्राणाय प्रेषिताः स्युः श्रीमन्तोऽत्र। यतस्तो राश्रीज्वरेणार्तो जनकं यहिमां स्म गम इति प्रार्थयत बालः। परं दिनमेकमप्यपत्यमितुमनिच्छता पुत्रकस्य ज्ञानेनोक्तं 'वत्स, सर्वोऽयं व्यवसायस्तव हितायैव। व्यवसाय एव द्रव्योत्पादकः। धनेन च भूयिष्ठवस्तूनि क्रेतुं प्रभवन्ति प्रजाः'। इत्येवं व्याहरता तेन साधूक्तं खलु। गणुरपि चतुरः पितुः प्रत्यागमस्य एकैकक्षणमनवरतं गणयन् स्थितोऽस्ती"ति।

न चिरात्तस्या नानाविधविकसत्कुसुमान्वितैस्तरुभिर्विराजितरमणीयं कुटीरमासादितवन्तावाम्। पीतनीलरक्तवर्णसुमनसां वृक्षाग्रलम्ब्यमानानां गुच्छजातेन कुटीरस्य तस्य मनोहरा सुषमा। अथ गृहस्वामिन्या प्रवेशितोऽहं कुड्यन्तर्भूतलविस्तारिविकिलिञ्जमधिशयानं चतुर्वर्षदेशीयमर्भकं तस्या अद्राक्षम्। मत्सत्काराय पेयमानेतुमपसृतायां तस्यां शिशोर्नाडीपरीक्षणमकरवम्। ज्वरितस्यास्वास्थ्यं नैतावदासीद् यथा जनन्याख्यातम्। परं डिम्भस्यास्याकृताद्वितीयो वदनाकारः सातिशयं चित्ताकर्षको मेऽभवत्। क्षणमात्रालोकनादेव प्रौढवयोनुरूपधिषणोपेतोऽयं शिशुरित्यकलयम्। अनतिक्रान्तशैशवस्य बालस्य तस्यानने नवनीतकोमले किमपि नैतिकं किमप्याध्यात्मिकमालोकि तेजो मया। जनसमूहे महत्यप्ययं वैशिष्ट्येनोपलक्षितो भवेत्सकृद्दृष्टस्यास्य च न विस्मरेदाननंजनः। बकुलकुसुमसुकुमारतनोर्मुखात्तस्यातिमधुरमधुराः सपरिहासाः सोत्साहाः प्रसन्नरालापाः। बालस्यास्य स्मितेन स्नपित इवानुलिप्त इवानन्येन कुतूहलेन विस्मयेन च

जोपमश्रणवं मृदुलां तद्गिरम् । जीवनानन्दभूते नन्दनेऽस्मिन् पितृभ्यां वर्षितेन प्रेमनिर्झरपूरेण कुटीरमिदं प्लावितमिति स्फुटमेवाभूत्क्षणात् । स्वजीवितसर्वस्वभूतसुतार्थमेव प्राणानधारयतां जायापती । तदर्थमेव पुत्रवत्सलः पिता प्रायस्यत्तरां प्रतिदिनं येनोपलभेत प्रौढवयसि जीवनसौख्यं शिशुरयम् । एष च पितृप्रेमोद्रेकस्य पात्रमभूदित्यप्युपलक्षितं सपदि मया । बालकेन तेन प्रदर्शितसमुदाचारेण स्वल्पपरिचितस्य मे सत्काराया नैकाभ्युपाया विचिन्तिताः । शयितश्च क्षोणीतले सोऽभ्यधाद् 'यदि श्रीमद्भिरनुमोदितः स्यां ग्रामोपकण्ठप्रदेशं निखिलं श्रीमद्भ्यो दर्शयिष्यामि । सन्त्यत्र कानिचित्स्थलानि सुदर्शनानि योजनमात्रदूरं पिशाचाधितो पुरातनवीराणां दुर्गं' इति । तद्विचारशीलतया विस्मिताय मह्यमाख्यातवानयं बालः कस्यचित्सिद्धस्य लोकोत्तरचरितं यस्य समाधिर्मम सुहृन्निवासान्नातिदूरस्थोपत्यकाया अधोभागे निवेशितोऽभूत् । 'अपि जानन्ति श्रीमन्तो यदस्मद्देवालयेऽग्रन्येन पुरोहितेन श्राविताः पुराणकथाः । तातपादा अपि मे पुराणकथानकमहापुरुषा इव पुण्यवन्तः । अत एव स्निह्यति पूतात्मनि तस्मिन् परमेश्वरः । सर्वाभीष्टं च वितरति तस्मै देवः' । इति बालकेन तेन सगौरवं मधुरमधुरवचसा निवेदितं वृत्तान्तमाकर्ण्य नितरां विस्मितोऽभवम् । समयेऽस्मिन् जननी शिशोर्गृहकार्यव्यापृता प्रकोष्ठे गतागतं कुर्वन्त्यपि वचनेऽस्य बद्धावधाना बभौ । कुटीरमिदं तेनैव विमोहितम् । तस्यैव मधुरस्वरेण सुधाधारामधरीकुर्वता दिव्यवाण्येव तत् पावितमिति मच्चेतस्यभूत् । यथा यथा च तत्र चिरायितोऽहं तथा तथाधिकं कुटुम्बेनानेनाकृष्टः समभवम् । अथास्वाद्य नारिकेलरसं सबालगृहस्वामिनीं सादरमापृच्छ्य निर्गमिष्यतो मे तनयस्य जन्मपत्रिकां प्रदर्शयितुं प्रावर्तत सा । विषयेऽस्मिन्नविद्वानहमित्यभिहिते मया पत्रिकेयमलौकिकी किलेति न्यवेदयत्सा मन्दस्वरेण । ततश्च क्षणोत्तरं पुनरब्रवीत् । 'बालोऽयं ननु पूर्वजानां पुण्योदयादुपायनीकृतो विभुना युवाभ्यामिति प्रागेवोक्तं भगवतो विष्णोरायतनस्य नेदीयसः पुरोहितेने'ति ।

अथार्धघटिकोत्तरं सुहृद्गेहमासाद्य मम प्रातःकालीनमनुभवं मत्स्यजीविकुटुम्बस्याश्चर्यं च न्यवेदयं तस्मै । अभिहितं च तेन । 'अम्बां सपुत्रामुद्दिश्य ब्रवीषि ? परिचितं मे कुटुम्बमिदम् । अर्भकोऽम्बाया आश्चर्यास्पदमिति वदन्ति जनाः' । इति वचनश्रवणेनेषत्संभ्रान्तं मां वीक्ष्य पुनर्वक्तुमुपाक्रमत सः । 'डिम्भोऽयं किल सामान्योत्तमनिर्माणयशास्पर्शितमपि यदि किमपि संपादयेत्तथापि मत्स्यजीविनोऽस्य क्षणमपि तं न संभावयेयुरि'ति । 'न कोऽपि सिद्धः स्वदेशे संमान्यते' इत्याद्युक्तिमूलमुदाहरणायो मया पुनर्मित्रेणाभिहितम् । 'मत्स्यजीविनोऽयमापन्नमूर्खोचितश्रद्धान्विता विश्वासशीलाश्च खलु । पुरातनमुनीन्द्रेषु बद्धादरा इमे स्वग्रामपरिसरायातमपरकुलोत्पन्नस्य कदाचारपरधारिणः सामान्यसंन्यासिनोऽपि पादयोः स्वशिरांसि निदध्युः परं स्वजातीयं सिद्धपुरुषमपि तृणमिवावधारयेयुः' । इत्युक्तवति सुहृदि भणितं मया 'स्वाभिमानविवर्जिता ह्यमी स्वस्तु च स्वजात्यभिमानाशेन निरूपयन्ति' इति ।

प्रस्थितानां मत्स्यजीविनां मन्दभागानां चिन्तनेन व्याकुलोऽभवम् । नासीदपि मे शङ्का निष्कारणा । परेद्युर्हि समुद्रतटे शोकोद्रेकेण ग्रस्तं जनसमूहमद्राक्षम् । भूयिष्ठास्तत्र तत्तदासन्नविनाशास्सकरुणं व्यलपन् । भर्तुर्नाशस्य शोचनीयोदन्तेन स्तम्भीभूतामम्बामपि समुदायेऽस्मिन् व्यलोकयम् । संक्षुब्धबद्धदृष्ट्यास्तस्या रुचिरलोचनयुगलं बाष्पबिन्दुशून्यमासीत् । परेशकृपया सुरक्षितप्रत्यागतान् बान्धवान् कतिचिद्योषितः प्रहर्षाश्रुप्रवाहेण स्नापयामासुः । 'तवात्मजो न पुनरायास्यती'ति विज्ञापिता काचित् स्थविरा कुक्षियष्टिमवलम्ब्योपस्थितेह शोकार्णवे न्यमज्जत् । दुःखातिशयात् तपस्विनीयं पलितकेशकलापमात्मीयमाकर्षदुरश्च प्राताडयद्वत्सलपाणिभ्याम् । अम्बा तु निश्चला चेतनेव पाण्डुरा लुप्तभावा सुप्तेव पराभूतेवान्तर्दहद्दुःखात्मनः सहस्रधा स्फुटीकुर्वती ओपमस्थात् । जनपूर्णोऽपि शून्यीभूतो ग्रामो दशदिशश्चान्धीभूता इति निःशब्दं निर्विकारवदनं सा व्यानक् । प्रथमदर्शनजनितप्रीतिरनुकम्पयाभिभूतोऽहं तामुपेतवान् परं किं वक्तुमुचितमिति प्रतिपत्तिमूढस्तूष्णीमेव मुहूर्तमवस्थितवान् । क्षणोत्तरम् 'अपि सह भवत्या कुटीं गच्छेयमि'त्यनुनेतुमधार्षि मया । अथ सकम्पशिरसानुमत्य मदभ्यर्थनां मयानुगम्यमानाग्रे सा प्राचलत् । पुत्रदर्शनेनाश्रुबिन्दुषु विमुक्तेष्वेतद्दुःखावेगस्योत्कटतेयन्मन्दीभवेदित्याशास्यत बलवन्मया । परं मत्पूर्वकल्पितप्रतिकूलं तयाचरितम् । 'अपि तातपादा नाद्यापि निवृत्ता' इति बहुदिनान्तरितदर्शनेनेव सोत्कण्ठं प्रतीक्षमाणेन बालेनानुयुक्ता सा रुद्धकण्ठं मन्दस्वरेण प्रत्युवाच । 'वत्स तातस्य पोतो न प्रत्यागतोऽद्यापी'ति । अज्ञातः शिशुरशङ्कितानर्थोऽपि चिन्ताकुलोऽभूत् । परं सायं समुद्रतीरं गत्वा पितरं सहर्षं विस्मापयिष्य इति संकल्पयितुं बालः प्रवृत्तोऽभूत् । 'तातचरणा मामुद्धृत्योर्ध्वगगनं प्रति निक्षेप्स्यन्ती'त्यभिधाय प्रेमनिर्भरेण मनसा चिन्तयन् पतत्त्रिशावकानन्दं विडम्बयमानः प्रजहास । अम्बा तु पतिविरहविधुरापि न बाष्पार्द्रिकोद्गारमकार्षीत् । शून्यदृष्टिः सा केवलं बालस्य जल्पनं श्रावं श्रावं निःशब्दाऽतिष्ठत् । शोकस्य तादृगनुद्रेकोऽस्वाभाविकः प्रत्यासन्नानर्थशंसीति मन्यमान्ये ।

तदनु श्वः पुनरायास्यामीति बालकाय प्रतिश्रुत्य कुटीरं व्यसृजम् । क्रमेण मन्दीभूते प्रभञ्जनवेगे सायंतनिकसमयोऽतिरमणीयतामभजत् । सुहृद्गेहे मदीयं निर्दिष्टप्रकोष्ठस्य वातायनतः सरसः श्लक्ष्णतामनुकुर्वन्तमब्धिमवालोकयम् । विदूरं ददृशे सरित्पतिः सरितं कामपि संजिगमिषुरिव प्रशान्त इव रोमाञ्चित इव तथा निश्चलो यथा नीलमयाभोगादवलम्ब्यमानोऽम्बरतलादिव । अथ तस्मिन् क्षणे सागरतीरे कस्याश्चिन्नौकाया आगमप्रसंगतः संजातसंरम्भः स्फुटमालोक्यत । प्रायो नीवाराहारभाण्डसंग्रहस्य पोतेनानेन भाव्यमित्यतर्कि मया । पुरः प्रस्थानात्प्राक्केचन पान्था नौकाया अवारुक्षन्नित्यपि मयादर्शि ।

अथ परेद्युः प्रातस्तरां सह मित्रेण विहाराय गतेन मया सूर्यास्तमनात् पूर्वमम्बाया गेहमुपस्थातुं नापारि । विदूरस्थालोके यद्दृष्टिः शून्यलोचना तपस्विनीयं कुटीरस्य देहल्यां तिष्ठन्ती मदन्तिकं समुपेतमपि मां नालोकयत् । 'अपि कुशलं बालस्ये' त्यनुयुक्ता मया साऽब्रवीत् । 'उपाल्लवितृस्वरप्रबलगुरुतुङ्गलं क्षाम्यति स्म बालस्य मनः ।

रात्रौ पितुरन्वेषणार्थं निर्गतो गृहान्नाद्यापि प्रत्यागतः। बालस्य दैवमनुकूलं प्रसादकं भवेदिति मनसि कृत्वा तस्य प्रस्थानमन्वमंसि मया। को जानाति काऽद्भुतघटना नियतेरिति। अपरं च तज्जनकस्य तिरोहितस्य शोचनीयं वृत्तं तस्मै निवेदयितुं नैच्छम्। समुद्रतीरे कोऽपि तस्मै निवेदयतु वृत्तम्'। इत्यभिधाय स्फुटितहृदयाऽन्तर्गतशल्येन दुःसहदुःखाभिहतेव प्रथममेव मुक्तकण्ठं रोदितुमारब्ध सा। 'जन्मान्तरदुष्कृतस्य फलमवाप्यते पातकिन्या मये'ति मुहुर्मुहुरात्मानं सगद्गदं शपन्ती नेत्रजलमनवरतमस्रावयत्। नार्हस्यनिन्द्यमात्मानं निन्दितुमि'त्यभिधाय द्रवीभूतान्तरङ्गोऽहं तस्या बाष्पप्रवाहोपशमपर्यन्तं जोषं स्थितवान्। ततश्च 'बालमन्वेष्टुं यास्यामि भवत्याऽनुमत' इत्युक्तवन्तं मां कम्पितशिराः प्रत्युवाच दीनदीना सा। 'निखिलरात्रिमाप्रभातं पर्यटन्त्याऽपि न मयोपलब्धो बालो न केनापि मत्स्यजीविनावलोकितो वा। स्वल्पिष्ठेव ग्रामटिकेयं परं वेष्टितास्ति परितः पयोधिना। नावतिष्ठेत ■ पितृरहितः सह मया मन्दभागिन्येति प्रायो नियत्या निर्दिष्टं स्यात्'। इत्यनवरतं नयनजलवर्षिणी साऽभिधाय करपल्लवाभ्यां नेत्रजलप्लावितमाननमावृत्य क्षणं निश्चला तस्थौ। न व्यलपत्सेदानीम्।

अथ नैकदिवसान् बालकमस्याया अन्विष्यापि सर्वत्र नैष्फल्यमेवोपनतं गवेषणस्य मे। पितुस्तिरोधानमनुकुर्वतोऽस्यैकस्यैवात्मजस्यादर्शनेन तपस्विनीयं नचिरादवसन्ना भवितेति मे शङ्का याथार्थ्यं न भेजे। तथा हि। न पुनस्तां रुदतीमपश्यम्। दैवनिष्ठा तस्या मां व्यस्मापयततराम्। क्रमेण च सम्प्राप्य स्वास्थ्यं मनःशान्तिमपि शनैः शनैरुपालभत सा। पतिपुत्रयोर्विनाशान्निजसुखं न लुप्तं परमनवरतं तयोश्चिन्तनेन तन्निरन्तरमेव स्थास्यतीति सा मां समाश्वासयत्। साध्व्यास्तस्यास्तितिक्षा मनीषिणस्तत्त्वज्ञानमप्यतीत खलु। असामान्यस्मादद्भुततमः। तदत्र पुनरागन्तुं न विस्मरिष्यामीति ग्रामान्निर्गमात्पूर्वं सुहृदे प्रतिश्रुतं मया।

समस्मारयत्पुराणेषु सङ्कीर्तिता दिव्यविभूतीः । तमालोक्य कारणं विना सहजप्रेमनिष्पन्द-निर्भरं मे हृदयं समजनि ।

अथोत्तरेघ्रगगनतलमध्यमारूढे सवितरि नौका निर्दिष्टस्थानं सकाले यदा प्राप तदा मुनिकुमारमिमं संभावयितुं मत्स्यजीविनां स्त्रीपुरुषार्भकाणां महौघो घट्टे संमिलितोऽदर्शि मया । समुल्लासितो जनोत्साहेन लोकयात्रार्णवेऽस्मिन् पुनरपि निमङ्क्ष्यामीति मनसि कृतं मया । मदागमनाभिज्ञः सुहृन्मे न समायातस्तत्र । कथमपि लब्धमार्गो व्यलोकयं काञ्चनाविकृत्राङ्गयष्टिं मध्यवयस्कामङ्गनां यतिकुमारदर्शनानन्दानन्दमिव अनर्बहिष्कृतामिव सहर्षा सरभसं प्रधाविताम् च । पूर्वं वर्णिता मित्रेण मे धर्मोन्मादजन्यमूढकल्पनाकथा श्रद्धालोर्जनस्यास्य मत्स्मृतिपथे न्यपतदिदानीम् । घट्टास्थले विलम्बमानो मुहूर्तं स्थितवानहमन्वेषुमथ्वां यस्या ईश्वरेच्छावलम्बनं तितिक्षा च मामियत्कालोत्तरं पुनरायातुमत्र प्रालोभयेताम् । परं मोघीभूतो मे गवेषणप्रयत्नः । न क्वापि तस्याः संवादिनी दृष्टिगोचरता मयासीत् । तदनु भग्नाशः प्रस्थितः सुहृद्गेहम् । अस्तङ्गते भगवति सहस्ररश्मौ प्रदोषस्य मन्दमन्दप्रकाशे स्खलितमार्गोऽपि दिष्ट्या न चिरात्समुचितचरणपथमुपलभ्य तत्र च प्राप्तवानहम् ।

अथ रात्रौ समाप्तसंध्याहारयोरावयोरभाणीत्सुहृन्मे—" निःसंशयं समायातोऽसि पुनरागन्तुं किमपि घटनार्थमनमूलमयं विज्ञानिप्रत्युपूर्वमभिनन्दितं मन्ये "ति । तथैव क्लिलेति तद्वचसो याथार्थ्यमुररीकृत्यापृच्छम् ' अपि जीवति सौम्यमूर्तिरम्बायापि न वेति ' । ' जीवन्त्येव सा परमतोऽभिज्ञाना खलु । कृत्स्नशः परिवर्तिताऽस्ति सम्प्रति ' इत्यभिधाय मे सुहृत्तमासुपानं मन्वात्स वृत्तमम्बायाः कथयितुमुपाक्रमत । यथा—

" तपस्विनीमिमामकाले परिगतवयस्कां नाभिज्ञास्यसि खलु । निष्फलजीवितेन निर्णीया, निरालम्बना, ग्रामीणैरत्र मायाविनीति तिरस्कृता, निद्राचारिणी, विंशत्यब्दपूर्व तिरोहितं तनयं समाह्वयन्ती जलान्तः प्रच्छन्नो ध्रुवं पुनश्च स्वस्यै समर्पयिष्यत इति प्रतीता "। एतदाकर्ण्य दोदूयमानचेतसं मां सुहृदभ्यधात् पुनः । ' अज्ञानान्धकारस्य तेषां ध्वंसनमशक्यप्रायम् । को हि धीरेन्द्रस्य कन्दरेऽत्र कस्यचन तरुगतापन्नस्य श्रोतुं वचनं संगंस्यन्ते परःसहस्राः मत्स्यजीविन " इति ।

' मुनिकुमारोऽयं सहपान्थो मे । तथैव नौकया प्रवासं कृतवानद्य ' । इति निवेदितो मया सुहृद् व्याहरत । ' त्रिचत्वारिंशताभिमतस्तत्र्योऽयमलौकिकप्रभावः स्पर्शमात्रेण सर्वव्यथामुपशमयतीति श्रद्दधते मत्स्यजीविनोऽन्याः । विषाभिभ्रकुल्लोद्भवो मृमुत्वरोऽयमिति तमन्धवत्पूजयन्ति । यदि मया सह वीरदुर्गमायास्यसि भवत्तदा तेषां हास्यास्पदीभूतां श्रद्धां कुमारेऽस्मिन् स्वयमेव साक्षीकरिष्यसि ' इति ।

अथ रजन्यां तस्यां शयने शयितोऽपि चिरमुन्निद्रः स्थितवानहम् । हिमांशुना पूर्णकल्पेन विजनतटेऽम्बुधे रजनायितो नैकयोजनदीर्घधवलमच्छदपट इव शुशुभे । अविरमगोचराक्रान्तमस्यां शयने आपद्दवम्यिविनोचितेति तपस्विन्या भव्याया दिदृक्षया प्रेरित इव बहिर्गन्तुं प्रवृत्तोऽभवम् । विविक्ते रत्नाकरस्य तटे चन्द्रमण्डलेनाप्लाव्यमाने

मञ्चः, श्रेष्ठिमी रजतसुवर्णनाणकपूरितानि पात्राणि रत्नखचिताभरणजातं च । तानि सर्वाणि स्पृष्ट्वैव सशिरःकम्पं स्मितमात्रेणाङ्गीकृतानीवादर्शयन्मुनिः । अथ भगवतो मार्तण्ड-स्यास्तमनसमये समग्रमपि प्राङ्गणं पञ्चसहस्रैर्जनैः पर्यपूर्यत । तदा मुनीन्द्र आसनात्समुत्थाय बद्धाञ्जलिः श्रीमद्भागवतपुराणगतस्तोत्रश्लोकं गम्भीरेण श्रुतिमनोहरेण स्वरेण गातुमा-रब्धवान् । यथा—

> यं ब्रह्मावरुणेन्द्ररुद्रमरुतः स्तुन्वन्ति दिव्यैः स्तवै-
> र्वेदैः साङ्गपदक्रमोपनिषदैर्गायन्ति यं सामगाः ।
> ध्यानावस्थिततद्गतेन मनसा पश्यन्ति यं योगिनो
> यस्यान्तं न विदुः सुरासुरगणा देवाय तस्मै नमः ॥

समाप्तस्तोत्रपठनमात्रः क्षणं जोषं स्थित्वा यावदुपदेष्टुमारभते तावत्सभाप्रान्त पश्चिमाया आक्रोशस्वरः पुरुषस्यैकस्य सन्तर्जयमानस्य कर्कशध्वनिनानुगम्यमानः सहसा समाकर्णि । कोऽपि जनः प्राङ्गणं प्रविविक्षुर्दौवारिकैः सरभसं निष्कासितो बहिश्चादिनि संक्षोभस्य कारणमवगतं मया ।

" प्रविशतु सा । प्रविशतु सा । " इति प्रत्यक्षीकृतवृत्तव्यतिकरेण मुनिना प्रोच्चैरादिष्टम् ।

" मायाविनीयम् । बहिष्कृतास्ति । निष्कास्यतां सा । " इति श्येना इव शकुनिमण्डले युगपदेव केचन सभामण्डले समाक्रोशन् ।

" मा भूत्कोऽपि बहिष्कृतो विभुना निर्मितः प्राणी । समायातु सा मत्सविधे " इत्युदीर्येङ्गितेनैव दौवारिकं प्रवेशयितुं क्षिप्रमेको निरदिशत्तापसः ।

अम्बामन्तरा नास्तीयमन्येति सहचरो मे कर्णेऽजपत् । वस्तुतश्च साऽभूदम्बैव । दीर्घाञ्चलाम्बरवेष्टितशिथिलाङ्गयष्टिः सा यावन्मन्दमन्दमसृपत् प्रति पीठिकां मुनेस्तावत्ता-मुद्दिश्य विकलापवादोच्चनिक्रो जनस्य मुखात्त्रिसृतः शुश्रुवे । मुनीन्द्रेणोन्नमितमात्रे हस्ते कलकलरवमुखरितः समुदायः सपदि तूष्णीं स्थितः । यतिश्च पार्श्वमुपेतुमम्बायै संज्ञां ददौ । सा च सभयं विनतमुखी संत्रस्ता हरिणीव सकम्पमभिहिता वेपमाना तं समुपेत्य पार्श्वेऽवातिष्ठत् । यति स्वमनोरथं पिशाचिनीव तस्या बाल्यादारभ्यातिदुःखमेव प्रत्यहीयत ।

' कोऽस्ति भवत्याः क्लेशः । निर्भयं कथ्यतां तावदि 'ति सौम्यया गिरा सातिशयं दर्शितादरो मुनिर्मन्द्रेण स्वरेणान्वयुङ्क्त । तदाकर्ण्य चक्षुषो विसृज्य बाष्पान् कथं कथमपि संरुध्य निःश्वस्येति जनेन मन्यमानाहमिति व्रीडया, भिया, दीनतया क्षितितलनिहितनिश्चल-नयना मुहूर्तं निःशब्दैव तस्थौ ।

' मा शृणुत मायाविन्या अस्या असंबद्धं कुटिलवचः । निष्कास्यतामेषे 'ति प्रतिपक्षनिरस्ताया विकम्पितं बहुभिः सभासद्भिर्युगपदाक्रुश्यत । मुनिश्च हन्मुखमन्य मानसविच्छेदकदार्षार्थ प्रतिबध्य ' कथ्यतां निर्भयं भवत्ये 'ति भूयोऽप्यधारयत् । तदा प्रबलसम्भ्रमातिभारमन्थरहृदया सा न्यगादत् ।

ज्योत्स्नया क्षणमात्रं प्रचलतो मे विदूरं मद्दिशमभ्यायान्ती दीर्घकृशाकृतिरम्बा दृष्टिगोचरतामगमत् । यथा यथा नेदीयसी साऽभूत् तथा तथा शोकात्मकगीतस्य मन्दमन्दकलरवः स्फुटमश्रावि मया । अन्तरान्तरा च सुतरामवदीर्णहृदयायास्तस्या रुदितध्वनिः शुश्रुवे । नेदिष्ठभूतायास्तस्या अस्थिपञ्जरभूतायास्तत् परिवर्तनमालोक्य नयने मे पूर्वदृष्टाम्बेयमिति न व्यश्वसिताम् । पूर्वं रुचिराकृतेः परमिदानीमाभासमात्रभूताया नेत्रयुगलं मुकुलितप्रायं शिलोत्कीर्णमूर्तेर्नेत्रयोः सादृश्यमभजत् । समुद्रतटप्रान्ताभिगमनात्सावधानमात्मानमभिरक्षितुमलं जागरिता दीनदीनस्वरेणाह्वयन्ती निजात्मजं प्रसारितकरयुग्माऽन्त्रनयत्पयोधिं यया — " हा हा रत्नाकर ! वञ्चितास्मि त्वया । किमर्थं निर्घृण इव गोपायसि पुत्रैकजीविताया मे गणुम् । अपि नास्ति पर्याप्तो रत्नराशिस्तव जलाभ्यन्तरे यदपहृतं त्वया मे पुत्ररत्नम् " । इत्युपालभत सा मुहुर्मुहुः सरित्पतिम् । अन्तरान्तरा पुत्रस्य जीर्णवस्त्रखण्डं कण्ठे गृहीत्वा व्याक्रोशत्सा । समुपेता नेदिष्ठमपि मदुपस्थितिमजानतीव पुरः प्राचलत् । चिरं समाह्वानकलरवं कुर्वती प्रस्खलन्ती पदे पदे बाष्पायमाणलोचना सनिर्वेदं पुलिनेषु गतागतमकरोद्यावदतिश्रान्ताऽसौ समजनि । अहमपि रजतायितस्फटिकसिकतास्वेव विश्रामितोऽत्रातिष्ठं यावदम्बा स्खलत्पदद्वयां स्वकुटीरं प्रति गच्छन्ती दर्शनपथातीताऽभूत् । अम्बाया अतिकरुणवैक्लव्यरुदितान्यनवरतमस्वनन् मत्कर्णशष्कुल्यां सुतरां च तैर्व्यदीर्यत हृदयं मे ।

प्रभातस्य विकसत्पुष्पामोदमयेन शीतसमीरणेन चुम्बिताननः प्रमुदितान्तरङ्गोऽपि तपस्विन्या अम्बायाः शोचनीयदशां स्मारं स्मारं सुहृदालयमभ्यागमम् । सायं सह मित्रेणागमं वीरदुर्गं यत्र मुनिकुमारः श्रीगणेशो महतीं सभामधिष्ठास्यन्नासीत् । आप्रातः स्त्रीपुरुषबालैः परःशतैर्मानिताध्यात्मिकगुरोर्दर्शनपिपासितैर्ग्रामस्य धूलिधूसरा रथ्याः सङ्कीर्णाः समभूवन् । मध्याह्नात्पूर्वमेव जनौघपूरितस्य पुरातनदुर्गस्य दीर्घकश्मीरजपटलेनेवाच्छादितस्य विशालप्राङ्गणभूमिस्य मध्यभागे विरचितमुच्चमासनं सामोदसुमनोमालिकाभिर्मण्डितं सौम्यमुखः सुस्मिताननो गौरवर्णः प्रशान्तमूर्तिस्तेजस्वी निखिलकोङ्कणावनिप्रथितमहिमा चतुर्विंशतिवर्षदेशीयो मुनिकुमारोऽयमध्यास्त प्रागेव । विशाले तस्मिन् सभास्थाने तस्य स्वरध्वनिं सुखेन श्रोतुं प्रभवेवेति नेदिष्ठस्थले दिष्ट्यासनद्वयमुपलब्धमावाभ्याम् । अहं चादृष्टपूर्वविषयकुतूहली मुनेः सङ्कीर्तितप्रभावेऽश्रद्दधानोऽपि चिरं श्रोतुमुत्कण्ठितोऽभवम् । सुहृन्मुखाच्छ्रुतामम्बां दयनीयदशापन्नां प्रत्यक्षीकृतां चात्रालोकयितुं यत्नवदानास्यत मया । परं सर्वतोऽपि निपुणं यद्दृष्टेर्मे न सा दृष्टिपथं न्यपतत् । जनसन्दोहेऽस्मिन् पुलस्त्यवनितार्भका मत्स्यजीविनो विहाय लोका इतरजातीया अप्यलोक्यन्त । तेऽप्यागमन् पुष्टिन, आधारदण्डमवलम्बमानाः पङ्गवः, अन्धा, व्याधिग्रस्ताः स्तनंधया आर्तरोदनाः कश्चित्कश्चिदन्येऽपि मुनिवरस्य साहाय्याभ्यर्थिनः समुपस्थिता आसन् ।

परं हन्त नाम्बादृश्यात्र क्वापि ।

प्रवेशद्वारस्य सम्मुखीनादुच्चासनान्मुनिपुत्रः केवलं निमिषमीलितसभामण्डलं दिग् मात्रं प्रविशतो जनानवलोकयितुमपारयत् । पीठिकायां तत्पादयोः समीपे निहिता पङ्क्तिशो भक्तजनैः स्वर्णरजतपात्रीकृताः सुगन्धिसुमनोमालाः, क्षेत्रिभिर्नानाविधपक्वमोदकानी-

सञ्चयः, श्रेष्ठिभी रजतसुवर्णनाणकपूरितानि पात्राणि रत्नखचिताभरणजातं च। तानि सर्वाणि स्पृष्ट्वेव सशिरःकम्पं स्मितमात्रेणाङ्गीकृत्यानीयादर्शयन्मुनिः। अथ भगवतो मार्तण्डस्यास्तमनसमये समग्रमपि प्राङ्गणं परःसहस्रैर्जनैः पर्यपूर्यत। तदा मुनीन्द्र आसनात्समुत्थाय बद्धाञ्जलिः श्रीमद्भागवतपुराणगतस्तोत्रश्लोकं गम्भीरेण श्रुतिमनोहरेण स्वरेण गातुमारब्धवान्। यथा—

> यं ब्रह्मावरुणेन्द्ररुद्रमरुतः स्तुन्वन्ति दिव्यैः स्तवै-
> र्वेदैः साङ्गपदक्रमोपनिषदैर्गायन्ति यं सामगाः।
> ध्यानावस्थिततद्गतेन मनसा पश्यन्ति यं योगिनो
> यस्यान्तं न विदुः सुरासुरगणा देवाय तस्मै नमः॥

समाप्तस्तोत्रपठनमात्रः क्षणं जोषं स्थित्वा यावदुपदेष्टुमारभते तावत्कस्याश्चन वनिताया आक्रोशस्वरः पुरुषस्यैकस्य सन्तर्जयमानस्य कर्कशध्वनिनानुगम्यमानः सहसा समाकर्णि। कोऽपि जनः प्राङ्गणं प्रविविक्षुर्दौवारिकैः सरभसं निष्कासितो बहिःस्यादिति संक्षोभस्य कारणमवगतं मया।

"प्रविशतु सा। प्रविशतु सा।" इति सम्पक्षीकृतव्यतिकरेण मुनिना प्रोच्चैरादिष्टम्।

"मायाविनीयम्। बहिष्कृतास्ति। निष्कास्यतां सा।" इति श्येना [illegible] शकुनिमण्डले युगपदेव केचन सभामण्डले समाक्रोशन्।

"मा भूत्कोऽपि बहिष्कृतो विभुना निर्मितः प्राणी। समायातु [illegible] सन्निधे" इत्युदीर्येङ्गितेनैव दौवारिकं प्रवेशयितुं क्षिप्रमेकां निरदिशत्तापसः।

अम्बामन्तरा नास्तीयमन्येति सहचरो मे कर्णेऽजपत्। वस्तुतश्च साऽभूदम्बैव। दीर्घाञ्चलाम्बरवेष्टितशिथिलाङ्गयष्टिः सा यावन्मन्दमन्दमसृपत् प्रति पीठिकां मुनेस्तावत्समुदित्य विकृतापवादोक्तिनिकरो जनस्य मुखाच्छिद्रतः शुश्रुवे। मुनीन्द्रेणोत्थमितमात्रे हस्ते कलकलरवमुखरितः समुदायः सद्यस्तूष्णीं स्थितः। यतिश्च पार्श्वमुपेतुमम्बायै संज्ञां ददौ। सा च सप्रश्रयं विनतमुखी संत्रस्ता शुनीव सकलगणमभिहिता वेपमाना तं समुपेत्य पार्श्वेऽत्राविशत्। यति स्वमनोरथं विरुच्छियोस्तस्या वागुदीरणात्पूर्वमेव व्यक्षीयत।

'कोऽस्ति भवत्याः क्लेशः। निर्भयं कथ्यतां तावदि'ति सौम्यया गिरा साविनयं दर्शितादरो मुनिर्मन्द्रेण स्वरेणान्वयुङ्क्त। तदाकर्ण्य चक्षुषी विमृज्य बाष्पान् कथं कथमपि संरुध्य निकृष्टेति जनेन मन्यमानाहमिति व्रीडया, भिया, दीनतया क्षितितलनिहितनिश्चलनयना मुहूर्तं निःशब्देयं तस्थौ।

'मा शृणुत मायाविन्या अस्या असंबद्धं कुटिलवचः। निष्कास्यतामेषे'ति प्रतिपक्षाद्विरम्याया विवक्षितं बहुभिः समासद्भिर्युगपदाकृष्यत। मुनिश्च हस्तमुच्चमस्य मारणविच्छेदस्तदाक्षेशे प्रतिबध्य 'कथ्यतां निर्भयं भवत्ये'ति भूयोऽप्यपृच्छदम्बाम्। तदा प्रवृत्तसम्भ्रमातिभारमन्थरहृदया सा न्यगदत्।

" भगवन् ! पुरा तिरोहितपितुरन्वेषणाय निर्गतो जलधावन्तर्विलीनोऽस्ति ममात्मजो गणुः । तमन्तरा नास्ति कोऽपि मेऽन्यः । पुत्रैकवत्सलायै मे समर्प्यतां स बालः । न किमप्यस्ति खल्वसाध्यं भगवतः । कुवलयान्यपि दिवकरकरानुरागीणि भवेयुः, सरोजान्यपि रजनीनाथेन सख्यं कुर्युः, कौमुद्यपि कृष्णपक्षमनुव्रजेत् । भगवन् ! किमसाध्यं भवत्तपःप्रभावस्य ? " इत्यम्बा रचिताञ्जलिर्मर्मस्पृशा स्वरेण सहृदयान्तर्भिदा सगद्गदमगदत् । ततश्च निःशेषशोचनीयकथामात्मन आख्याय पटप्रान्तेनाच्छाद्य विह्वलाननं दुर्निवारबाष्पवेगमपारयन्ती निवारयितुमुन्मुक्तकण्ठं व्यलपत् ।

अथ गाढमार्द्रीकृतहृदयो मुनिरतर्किताकल्पनीयदैवाघातप्रहत इव विस्मितः सम्भ्रान्तः स्तम्भित इव मुकुलितेक्षणः क्षणमात्रं जोषमवातिष्ठत । अम्बाया दर्शनादेवोपात्तप्रीत्यतिशयस्य तस्य भूतवृत्तपरम्परा स्मृतिपथे विद्युद्द्योतिशीघ्रतातिशायिनी सपदि समायासीत् । कमपि वृत्तान्तं स्मारित इव चिरविनष्टं प्रियजनं प्रापित इव क्षणं दोलायमान इव स्थितवान् सः । अशुभशंसिनी निःशब्दता यावत्सभामण्डले प्रासरत्तावद्गाढं विमृशतस्तस्यान्तः कर्तव्यस्वप्रतिष्ठयोर्मध्ये द्वन्द्वं प्रावर्ततेति तदाननमण्डलादन्वमीयत । क्षणोत्तरं आत्मपरित्यागेनाप्यम्बयाऽर्थिन्या असह्यशोकवेदनाप्रतीकारस्यावश्यकर्तव्यादात्मनः प्रतिष्ठाविलोपं तृणमिवागणयत् । समस्तमस्य जीविनामज्ञानामम्बामुद्दिश्य तिरस्कारस्य प्रत्यक्षदर्शनेन ज्वलद्दुःखमादर्शेनेव विचिन्तनतनुमुखेन तच्चेतो व्याकुलीबभूव । ' नैतः परमज्ञानान्धतमसे मग्नानामेषां मोहविलसितं मौर्ख्यस्खलितमज्ञानपद्धतिश्च समुत्तेजनीयानि खलु । मयैव पुनरेषां मूढतासमुद्घोष्या ' इति निर्धार्य ' भगवति ! न सम्प्रति गृहाणि जलनिधिस्तवात्मजम् । मातस्तिष्ठत्येव तवाग्रेऽद्य तव सुतो गणुः । तन्मुच्यतां शोकानुबन्धः । ' इत्युदीर्याम्बायाः पादयोर्न्यपतन्मुनिर्गणेशः । सा च क्षणं विस्मयातिशयेन स्तम्भितेव मूकेवातिष्ठत् । ततश्च तापसः समुत्थाय कर्णे तस्या यावज्जपति किमपि तावदमृतवृष्टिमिवमाकर्ण्य तद्वचनं ' मम वत्स ! मम वत्से ' ति सगद्गदं निगद्य महर्षिनिर्भरप्रेमनिर्झरीयपरिप्लुतातिदूरप्रसारिताभ्यां दोर्भ्यां पर्यष्वजत सा मुनिम् । ततश्च तस्याननशिरोरुहहस्तांसपृष्ठं स्वप्नात्सहसा जागरितेव पर्यमृशत् । [illegible] च करतलेनाभिनवपल्लवेनेव हर्षबाष्पप्रक्षालितमाननं मातुर्ममार्ज । समृद्धमनोरथा वृद्धा तरुणस्याङ्गप्रत्यङ्गानि निपुणं निरूप्य विस्मयविस्फारितलोचना तं मुहुर्मुहुर्गाढमालिङ्गत् ।

अथ स्वप्नेऽप्यसम्भावनीयं समाचेष्टितं मुनेरालोक्य ' मायया विमोहितोऽसौ मायाविन्ये ' ति रोषाविष्टा मत्सरजीविन उदक्रोशन् । धर्मान्धेषु निष्ठुरोन्मुखेषु तेषु रुधिरस्रावगदुर्वहाभासोऽन्तरिक्षे विलम्बमान इव स्थितः । पशुमारमम्बां मारयेयुरज्ञानान्धा जना इत्याशङ्क्यानिष्टपरिहारायान्वर्थनामा मुनिः परित्यज्य प्रतिष्ठामनुगामन्याऽर्पितामपकर्षाद्भिया द्व्यमोचयदम्बां सावधानं च तां जनोपद्रवादभ्यरक्षत् । तदनु तेनाट्टहासज्योत्स्नाविशदेन गुम्भगम्भीरेण भूयो बभाषे ।

" अयि भोः सज्जनाः ! नेयं मायाविनी परं मे प्रसूः । श्रूयतां मम वार्ता विस्मयस्पृशा तावत् । दिनानि द्वित्राणि पूर्वमनतिक्रान्तदशाब्दोऽहमन्धकारितदिक्षु वारिधेः

पुलिनेषु तिरोहितपितरमन्विष्यन्नार्त्यां पर्यटन् परिश्रान्तः कम्प्यमानदेहः शुष्ककण्ठो मूर्च्छितः सिकतायां निक्षिप्तविग्रहः शयितः । कतिपयदिवसोत्तरं तापसजनैः परि-क्षिप्तमात्मानं नौकायामद्राक्षमहम् । नैकमासान् ज्वराभिभूतः सन् सयत्नं तापसैर-हमहमिकया सेवित उद्भूतमूर्च्छान्धकारोऽज्ञातदेशमवतीर्णः कदाहमागतः कुत्र आनीतः क्विमकरवं कोऽहमिति न किमप्यज्ञासिषम् । नष्टस्मृतितया मत्पितरौ महान्तं मदीयं ग्रामोऽयं सर्वमपि मत्स्मरणसरण्याः सम्मार्जितमिवाभूत् । न कोऽपि मानुषजनमण्डले तस्मि-न्नज्ञातात्कोऽहं का मे गतिः कस्यामत्र इति । तत्तु तेष्वेकेन महानुभावेन महर्षिणास्नु-हार्द्रचेतसा परिपोषितः पुत्रनिर्विशेषं लालितश्च । स च मे परमपूज्यो गुरुदेवोऽभूत् । अतिप्रेम्णा संवर्धितं मां हितपुत्र इत्याख्यया निखिलविषयो विज्ञानोपिता मे स्वयमेव तेन निवेदिताः । पितृनिर्विशेषे तस्मिन्नचिरं सातिशयमहम् । अथ तेनिकान्तशैशवस्तेनैव शापितमायमित्रशिक्षणोऽध्यापितधर्मशास्त्रवेदान्तोपनिषद्रामायणमहाभारतादिपुराणकथावृतं च । विंशतिवर्षीयो नैष्ठिकब्रह्मचर्यमूर्तो प्रापितः क्रमेण चाधिगमितभगवद्गीतारहस्यादि-विषयेष्वनुण्यः प्रवक्ते लब्धदीक्षो गुरुदेवैरभिनन्दितः प्रोत्साहितश्च नष्टमध्यदेशान् प्रेषितोऽहं सनातनधर्माभिरक्षणाय । बहवो देशा मयावलोकिताः । नवा नवा भाषा अवगताः । नूतना नूतनाः मनुष्याचारपरिपाट्य आकलिताः । वर्षत्रयात्प्रागनिरुपणीय-गुरुदेवानां पवित्रशरीरमरमभूमिमलङ्कृता । तत्रारभ्य तदाज्ञानुसारेण तदनुगरन्तहौ अनोऽ-यमतिसामान्यो गुरुदेवानां पदे प्रतिष्ठापितः । इदानीं दैववशाज्जननीमालोक्य तन्मुखा-त्पूर्ववृत्तान्तं निशम्य कस्मादप्यगम्यदैवविलसितात् स्मारितचिरविस्मृतबाल्यवृत्तान्तः सर्वमिमं मतिष्ठडम्बरं विस्रष्टुं संनद्धोऽस्मि ।"

इत्यतिगम्भीरस्वरेण निवेद्य क्षणमात्रं स्वभावधीरप्रकृतिरपि मुनिर्नितरां पर्याकुल-स्तूष्णीमवातिष्ठत । तत्तु नैकप्रकारजननीलालनमुग्धोचितहृदयोत्कण्ठो मुहुर्मुहुः प्रियवाद-मधुराभिः शोकप्रमोदनिपुणाभिर्वाग्भिस्तामाश्वास्य प्रकटमप्राप्तामम्बां विह्वलान्तःकरणां गरीयसा प्रेम्णा प्राङ्गणात्सुरक्षितामनैषीत ।

"नायं प्राक्तनकुमारो मत्स्यजीविनः सुतस्तु केवलम् । निर्लज्जा । जाल्मा मत्स्यजीवी केवलमयम् । धिगस्मान् । स्वजातीयोऽप्युपासितः पूजित आराधितो दैववदस्माभिः ।" इत्यामने नितरां कुपिताः समगर्जन् ग्रामीणाः पुनः पुनः । मीपमोच्छेदाश्च तेषां न व्यरमतान्पुनर्द्वितीयाऽप्या प्रक्षोभस्यैषमानतिमिरे शनैः शनैरगमददर्शनम् ।



॥ श्रीगणेशाय नमः ॥

# १४. आत्मनिर्वासनम्

चिरादवसितप्रायो दिवसो महाराष्ट्रमण्डलनिविष्टे कस्मिंश्चित्पर्वतबहुले लोनावलि-नामनि ग्रामे । अस्तंगतो भगवान् मरीचिमाली । परिपूर्णद्विजपतिमण्डलसनाथीकृतग-गनतलान्पतन्तीभिः पयःफेनधवलरश्मिधाराभिर्धराधरो धरा च धवलिता आस्ताम् तावत्स-हसा विदूराद्वृषभग्रीवावलंबमानायाः किंकिणीमालाया झणत्कारे श्रुतमात्रे झटित्यासनादुत्तस्थौ भिषग्वर्यो गुणे इत्यन्वर्थोपनामा । मीराया गृहं गतो गृहस्यालिन्दप्रान्तं समुपेत्य विदूरं बद्धदृष्टिः सोत्कण्ठमुत्प्रेक्षमाणः स्थितवान् । 'स्वामिनी यमलपुत्राभ्यां सह नारिकेल-पौर्णिमाप्रसंगवशाद्ग्रामान्तरेऽनुष्ठीयमानं महोत्सवमुपस्थातुं प्रातस्तरां प्रयाते'ति सेविकया विज्ञापितोऽपि प्रत्यैक्षिष्ट स मीराम् । कदा निवर्त्स्यतीति गृहं स्वामिनीत्यजानत्यामपि सेविकायां निजप्रयोजनस्य संपादनातिनिर्बन्धादानिशीथमपि महानुभावोऽयं प्रत्यैक्षिष्यत ताम् ।

श्रावणमासोऽवसितप्राय इदानीम् । प्रचुरवृष्टिवशात्सह्याद्र्यभ्यन्तरे सर्वत्र स्रोतांसि प्रावहन् । संप्रति तु स्वस्वक्षेत्रसस्यसमृद्धये क्षेत्रिभिरभ्यर्थितो मघवा वर्षावेगमुपाशमयत् । दिवसोऽयं च विहारानुकूलोऽभूत् । नारिकेलोत्सवयात्रां विहाय मीरा नान्यत्र क्वाप्ययादिति जानन् गृहाभ्यागतं मित्रं नाभूदधीरम् । अथ घण्टाझणत्कार उपबृंहितो यावत्सीमतरुप्रवेशा-पथच्छायाभ्यन्तरे शकट एको नेदीयान् मीराया आलयं प्रति समुपेतवान् । गगनतले स्फटिकसरोवरोदरे चमत्कुर्वता नक्षत्रमण्डलेन विरोचिते रजनिनाथेन सुमहद्धिङ्गोलेने-वावलंबमानेन शकटवृषभयोर्धवलिमाऽप्यायत । न चिराद् 'अम्ब ! अम्ब ! पश्य पश्य पितृव्यमि'ति यमलयोरन्यतरोऽवादीद्गृहसमीपं विरते याने । वाहनस्य लघुद्वारे समुद्घाटिते काचिदुन्नतसुभगाकृतिः षट्त्रिंशद्वर्षीया सुवर्णवर्णा सुलोचनाऽवारोहत्परतश्च पञ्चदशवर्ष-देशीयौ तस्य यमलौ अनिललोलकुन्तलौ सोत्साहं भूतलेऽवतीर्य प्रमुदिताननौ गृहाभ्यागतं प्रत्यधावताम् । सप्रेम लालितौ च सुहृदा पार्श्वमपासरताम् । तावन्मीराऽपनीयोत्तरीयं स्कन्धाद् 'बहुतिथः कालः खलु श्रीमतां दर्शनपथमागतानाम् । केन शुभप्रयोजनेनागता भवन्तोऽत्रे'ति वाग्मिनी स्मयमानाऽभ्युदक्रातिथिम् । 'संदेशमेकमविपुलार्थमादधानो भवतीं प्रतीक्षमाणः स्थितवानहम्' । इत्यभिधाय विरतवचसि मित्रे मीरा किंचित्संभ्रान्ता तं व्यरूपयत् ततश्च भ्रूभङ्गमात्रेण कुमारौ अपसर्तुं निर्दिष्टवती । क्षणादेव यमलयोर्गृहाभ्यन्तरेऽपसृतयोर् 'निखिलनिशामप्यत्रायापयिष्यं भवत्या दर्शनं यावदि'ति तेनोक्ते 'कश्चित्संदेशो वरुणेन्द्रप्रभृतीनां दिग्देवतानामि'त्यपृच्छन्मीरा सोपहासम् ।

गुणे—(सस्मिताननम्) न भौतिकदेवतायाः परं मानवदेवस्यैव संदेशः । कश्चिन्महाभागो निवेदयितुमिच्छति—

इत्यर्धोच्चारितवचनो मौनं स्थितवानतिथिः ।

मीरा—किं निवेदनम् । अपि मत्तनययोः विवाहमुद्दिश्य वक्तुकामोऽसि निवेदकोऽयम् ।

किञ्चिद्दोलायमानमानसेन किञ्चित्संभ्रान्तेन सशिरःकम्पमोमिति सुहृदा प्रतिपद्यमाने तयोर्मध्ये मुहूर्तं निःशब्दता व्यराजत। नेदिष्ठक्षेत्राद्ध्वाति मयूरस्य केकारवः। यात्रिकाणां गतागतं निवृत्तम्। ग्रामीणजनालापकलापो विरतः। विहङ्गकलकलः शान्तः। भूस्पष्टदृष्टि-र्मीरा च तावत्पुनरुन्नमय्याक्षियुगलं सम्भ्रान्तमतिथिं निरैक्षत।

गुणे—मया सह भवत्यर्धरात्रे प्रस्थातुमर्हतीति प्रार्थये। निशीथे धूमशकटेन प्रस्थितौ समुचिते काले प्राप्स्यावः संकेतस्थानम्।

मीरा—कुत्र मां नेतुमिच्छन्ति भवन्तः। कमधिकृत्य यूयं यूयमिति न किमपि विजाने। कथ्यतां विशकलय्य तावत्।

गुणे—(स्खलद्वचनम्) कस्यचन मित्रस्य सन्निधौ......

मीरा—यदि तत्सयोर्जनकमधिकृत्य वृत्तमिदं स्यात्तदा न किमपि श्रोतुमुत्सहे। व्यतीतो बहुतिथः कालः कुटुम्बं परित्यक्तवतस्तस्य।

पूर्ववृत्तस्मरणपरवशायाः मीरायाः स्वरो निश्वसनैरश्रुधाराभ्यां च कचकचशब्दतामवाप। क्षणं निमीलितनयनो जोषं स्थित्वा

गुणे—अलमतिनैष्ठुर्येण। अतिकष्टेरतोऽनुतापमेव जनयेत्।

मीरा—आर्याः, अनुतापस्य का कथात्र? वर्षदशकात् प्राङ् मामबलां सबालां तैरकारणं परित्यक्तां विजानद्भिरपि किमित्युच्यते भवद्भिः।

गुणे—सर्वमेतत्प्रतिपद्यते मया। तथापि मन्दभाग्यस्यास्य गृहत्यागस्य केनापि गूढकारणेन भाव्यम्।

मीरा—कोऽपराधो नाम कृतो मया यद्विना हेतुं संकेतस्थानकथनमपि परिहृत्य विरोहितास्ते।

गुणे—परं स्वकुटुम्बस्य योगक्षेमाय सर्वमपि यथोचितं विरच्य निष्क्रान्तोऽनुपः। न किमप्यपेक्षते भवत्या कुमाराभ्यां वा।

मीरा—सुस्थितं कुटुम्बं विधाय गृहात्पलायनं स्वामिनः किमुचितम्। वरं दैन्यमपि न तु परित्यागः पत्या।

गुणे—(सशिरःकम्पं सखेदं च।) नैतद्भवत्याः सुलावहम्।

मीरा—श्रेयः खलु दारिद्र्यं न पुनः परित्यागजन्योऽपमानः। तेषां निष्क्रमणादारभ्य कीदृशो विषमः कालो नीतो मयेति विदितमेव भवताम्। नेयं विधवा न वा सपतिकेति निखिलग्रामोऽयं कुत्सितवार्तापरम्परया कलङ्कयति मन्नाम सर्वथा। दयितेन समुज्झिता निर्दोषा तत्राप्यासन्नजनाश्रयहीना सर्वथा संशयास्पदं कौलीनभाजनं भवतीति न किं व्यजानीत भवदीयसुहृन्मणिः। नासीन्मे पिता न चाग्रजो मामभिरक्षितुमित्यपि विदित-मासीत्तस्य।

गुणे—भगवति, सत्यमेव सर्वम्। तथाप्यतिपारुष्यं मा स्म कृथा मदीयमित्र-विषये।

मीरा—(विस्फारितनयना) अपि कांदिशीकोऽयमनुकम्प्यते भवता। दयन्ते भवन्तस्तस्य स्वैरवृत्तेः।

*इयत्कालं मीरयात्मनि विद्वेषार्चिर्निह्नुतं सहसेदानीं रोषाग्निज्वालया प्रोद्दीप्यत।*

गुणे—(मन्थरस्वरेण शुष्ककण्ठम्) आर्ये। इत्यमाचरितुं केनापि गूढहेतुना प्रणोदितः स्यान्मम सहचर इति प्रतीतस्तस्यानुकम्पे।

मीरा—सपुत्राणां दाराणां परित्यागस्य तत्रापि पुत्रयोरुपनयनशुभप्रसंगे को नाम हेतुः स्याद् गृहमेधिनः। सर्वमेव तस्य कपटप्रबन्ध इति सुविदितमेव भवताम्। तथापि तत्प्रतिपत्तुं नेच्छथ यूयमिति मन्दभागाया मे दुर्भाग्यमेव।

इति तया सरभसमभिहितः सुहृद्वर्यो जोषमतिष्ठत्। तस्य निःशब्दतया प्रवर्धितेव परममुखरता तस्या व्यजृम्भत।

मीरा—किं नाम प्रयोजनमासीत्तस्य गमनस्य पञ्चवर्षदेशीययोर्यमलयोरनतिक्रान्तशैशवयोरुपनयननिर्वर्तनकाले। मंगलप्रसङ्गेऽस्मिन् निमन्त्रितातिथीनां विनोदनव्याजेन समानीता नर्तकी तेनैव नगरान्तरात्, तया सह च स पलायितवानित्यत्र नास्ति संशयलेशोऽपि।

गुणे—(करपल्लवाभ्यामाच्छाद्य नयने वाद्विवादादात्मानं निरोद्धुमिव सानुनयम्) मैवं। नैवं खलु।

मीरा—निखिलजगतो विदितमेतत्।

गुणे—(मित्रं रिरक्षिषुः) परिहासार्थेनैव चेष्टितेनानुपस्य भवितव्यम्।

मीरा—आधूमयानस्थानकं नर्तक्या सह गत्वा सत्वरं पुनरायास्यामीत्युक्त्वा तिरोहितो मित्रमणिर्भवताम्। अप्येतया स्खलितमार्गया भाव्यम्। नासीत्सा खलु स्तनंधया न चातिजरठा।

*गुणे—*अदृष्टपूर्वो भ्रमोऽयं तवेति *गन्तव्यमभूत्सह* तया परक्षिप्तदृशेण सुहृदा मे। (सविषादम्) हन्त। अतिदयालुत्वेन दोषभारमात्मन्यसकृदारोपयामास मित्रं मे वृथा) परहितेच्छातिशयो हि न परिणमति शुभाय सर्वदा।

मीरा—(अनागणय्य तद्वचः सकोपं च) वाराङ्गना अद्वितीयाः संचरन्तीति सुप्रसिद्धमेव।

गुणे—अपि स्मर्यते भवत्या यद्रात्रौ तस्यां महानर्थोऽपि भवेदभूदिति। पुनश्च रात्रौ मार्गो दुष्प्राप्य मा स्म भूदिति नगरपर्यन्तं तया सह तपस्विना तेन प्रायो गन्तव्यमासीत्। धूमयानमपि रजन्यां तस्यां षोडशपादूनमासीदतिवृष्टेरिति न स्मर्यते किं भवत्या।

*मीरा—*अप्रस्तुतकर्मनिष्पत्तयेऽनुपमो व्याजः ननु।

*गुणे—यावत्कारणमेव सरभसमनुचितानुमानं कर्तुं नार्हति भवती।*

इति सगद्गदमुक्त्वा स जिह्मचरादधिकं मारणं भयावहं भवेदिति।

मीरा—अहो ! तद्विचेष्टितस्य प्रयोजनं शिशुरपि तर्कयेत् । अलमलं भूयो भूयः समर्थनेन वत्सस्य तस्य । भवन्मित्रं नर्तक्या तयाऽस्मद्भ्योऽपहृत्य स्वायत्तीकृतमिति स्फुटमेव ।

मीरायाः कठोरकर्कशालापशरसंघातं सोढुमक्षम इव हस्ताभ्यां श्रुती आच्छादय-न्नियत्गुणेमहाभागः । अङ्गणान्मयूरस्य दीर्घकर्कशः केकारवो मीराया वचस्समर्थनायेव पुनरश्रावि । सा च तावत्स्वपतिमधिकृत्य तन्मित्रस्यौदार्यभावप्रकटनेन त्रिगुणेव प्रोच्चकैरुत्क्षिप्तस्वशिरः । अमुं कोपान्मोचयितुं तत्सुहृत्कृतमपरं क्षीणतरं सदोषतरमेव भावयन्त्यास्तस्याः प्रकोपाग्निर्भूयो भूय उददीप्यत ।

गुणे—प्रायेणाकारणमपि सकलविषयोपभोगनिवृत्त्यर्थमतिकरुणार्द्राणि भवन्ति सतां चेतांसि । अपि पुरातनवीरस्त्रीरत्नानामुदारचरितानि तितिक्षादर्शभूतानि न भवत्यां प्रेरयन्ति सहनशीलताम् । चिन्त्यन्तां तावत् स्निग्धायाः शकुन्तलायाः परित्यागो दुष्यन्तेन । अनन्तक्लेशजातं सीताया अनघायाः ।

समुदीरितवति विषण्णानने तस्मिन् मीरा बद्धदृष्टिः क्षणं जोषं तस्थौ ।

गुणे—भवत्याऽनुपस्यापरिमितगुणगणश्चिन्तनीयो न तु तदन्तिमाचरणम् । आत्मनिर्वासनास्यास्मयोः कारणं गोपयितुं प्रयोजनं गूढतरं स्यात्किलानुपस्य ।

मीरा—आत्मत्यागः परं भोगासक्तिः ।

गुणे—भवतु । कथ्यतां यथेच्छम् । वस्तुतः सर्वमेव श्वो ज्ञास्यति भवती । द्रक्ष्यति च कंचन सुपरिचितजनं यो निवेदयिष्यति किमपि रहस्यं गुर्वर्थम् ।

मीरा—किं निवेदनेन ? । मम काचः सर्वथा मम एव स्थास्यतीति न्यायेन भवत्सुहृदोऽपयशःकलङ्कः शशाङ्कस्याङ्क इवानुवृद्धिमेव भजते ।

गुणे—तथापि 'एको हि दोषो गुणसंनिपाते निमज्जतीन्दोः किरणेष्विवाङ्कः' इति कवीन्द्रस्य सूक्तिरियं न विस्मरणीया भवत्या ।

मीरा—'दूषितः सर्वलोकेषु निषादत्वं गमिष्यसी'ति रामायणस्या भगवतो वाल्मीकेः सूक्तिरपि भवता स्मरणीया ।

इति प्रगल्भमीरा तथाभिहितो गृहागतो घटीयन्त्रमुद्धृत्य कोपादात्मनस्त्वरालित-दृशा तद् व्यलोकयत् । गोधिकायास्तावत्प्रोच्चस्थले गृहस्य निगूढायाः कश्चिदशुभसूची "चिर् चिर्" ध्वनिरश्रावि ।

गुणे—भगवति प्रसीद तावत् । नायमवसरो निन्दायाः । एकैकः क्षणोऽपि बहुमूल्यः स्यात् । भवत्या द्विचित्ती मयि विश्वस्यताम् तावत् । न कापि भवत्या हानिर्भवितेति सशपथं वच्मि ।

मीरा—(सपारुष्यम्) अहो । इयत्कालं दारान् पुत्रौ च परित्यज्य किमपि संदेशं प्रेषयितुं प्रवृत्तं भवन्मित्रम् । मन्ये यत् कुलसंस्कारविध्वंसो नर्तक्या निष्कासितोऽस्ति प्रायः । इतो मां नेतुं निर्बन्धो विमुच्यतामिति बद्धाञ्जलिः प्रार्थये । न सोढुमधिकं मानभङ्गमुत्सहे खलु ।

इति निगद्य भूतवृत्तसंस्मृत्यभिभूतेव सा सद्यः समुत्थायेङ्गितमात्रेण निश्चयमात्मनः स्फुटमसूचयत् । अतिथिश्च विवर्णवदनः क्षणं विलम्ब्य दीर्घं निश्वस्य च सत्वरमभ्यगात् स्वगेहम् ।

मीरा च तावद् 'वर्षद्वयात् प्राग् रजन्यामेकदाऽनिष्टं शङ्कमाना भर्तारं प्रत्यैक्षे परेद्युश्च पर्युदस्तलिखितं पत्रमहं लब्धवती' इत्यादि सविषादमस्मरद्यत् । आलिखद्धि स संक्षेपतो यथा 'प्रेयसि । अनर्होऽस्मि संप्रति सबालया त्वया सह निवस्तुमतस्त्वां परित्यज्य गृहाद्विर्गम्यते मया । मदन्वेषणे वृथा मा प्रयस्यताम् । क्षम्यतां मन्दभागोऽयमिति शम्' । पठित्वा पत्रमेतद्वर्तक्या सह जिजीविषति भर्तेति लेखस्यार्थमकल्पयन्मीरा । पत्रस्य स्मरणेनाद्य तस्याः संतापाग्निः पुनरुदज्वलत् । नर्तक्या सह गतो गृहस्वामी पुनर्नायात इति विस्मितानामविदीनां विचक्षणचक्षुषां सकोपमस्मार्षीन्मीरा संप्रति । तिरोधानादनन्तरं प्रथमसंक्षोभशमोत्तरं यदा यदा बहिरगात्तदा तदा प्रतिवेशिनस्तां सूक्ष्मं निरूप्य कर्णेऽजपन्नवधपरम्परां यावत्सा व्यरमद्गेहाद्बहिर्गमनात् । केचिद् ग्रामीणास्तामुद्दिश्यावाच्यकथाः सर्वत्र प्रासारयन् । अन्ये च भर्तुश्चेष्टितमभिमन्य तामेवानिन्दन् । तस्या यमलौ सहचरैः पाठशालायां पुनः पुनः पितरमधिकृत्यानुयुक्तौ 'अम्ब ! तातचरणाः कदा पुनरायास्यन्ती'ति सौत्कण्ठ्यमनवरतमपृच्छतां मीराम् । सा च कम्पितशिरा न कदापि पितरं पुत्रौ द्रक्ष्यथ इत्यसूचयत् । एवं स्थिताश्रयस्ते पूर्णतो जनेन त्रिशिष्टा विविक्ते न्यवसन् । पुत्रकौ तौ यातजनकौ सम्यग्लालनसुखावपि जनन्यातिस्नेहलालितौ सुखेनात्यगमयतां शैशवम् । परिचितैः सर्वैश्च परित्यक्तस्य कुटुम्बस्यास्यावशिष्टमेकमेव मित्रं भिषग्गुणे नाम यः संकटसमये सहायकतया स्थितस्तेषु तथा दृढनिष्ठो यथा गृहस्वामिनि ।

अथेदानीं पूर्ववृत्तं मीरायाः स्मृतिसरण्यां न्यपतत् । अनतिक्रान्तकौमारया प्रथमसंस्तवादारभ्यानुपस्यास्मरसीमन्यलावण्यगाम्भीर्यादिसद्गुणावलोकनमोहितया रोमाञ्चितया हृदि प्रेमाङ्कुरास्तद्विकासभावपरंपरा समुत्कीर्णेव तन्मनसि सुव्यक्तमाविरभूत् । 'गुणाः प्रियत्वेऽधिकृता न संस्तवः' इति कवीन्द्रस्य सूक्तिरन्वसुराद्वं सोपहासं स्वप्रिया तत्सर्वमस्मरद्यत् सा । तदनु व्यचिन्तयत् सा निजोद्वाहदिनम् । समये तस्मिन् शिरोभिः सुवासिनीभिर्हरिद्राहरिद्रितशरीरमात्मानं परिधापितं वैवाहिकपीताम्बरं नीपाम्बरं रत्नखचितमरकताश्रुतस्वरप्रमोद्भासं मल्लिकाकुसुममालिकामण्डितकबरीभारं च । हन्त न कदापि पुनः परिधास्यते हरिद्राम्बरं तन्मया । प्रायो मन्त्रपाठस्थानसमये सुमनामसा तेनाप्ता- दिष्यानि कानि नार्प्यो सुवासिनी मन्त्रोच्चारम् । यथा हि प्रायेण सुवासिनी वैवाहिक- वेशभूषिताऽऽ कुङ्कुमरञ्जितललाटा समङ्गलमालिका पुष्पमालालङ्कृतधम्मिल्ला कपोलपिता मायते मन्त्रोच्चारणः प्रति निजमननम् । एवं क्रियाकलापेनानेन । [illegible] शिवशवदेहदहनम् ।

इति ध्यायन्त्यास्तस्या नयनयुगलाद्बाष्पबिन्दुसंदोहोऽस्रवत् । स्वर्गानुभूतस्मृति- स्मरविपाद ईश्वरपराधिनै वर्जेनगावमरस्या यमलयोर्भ्रमनयश्चे दयितस्य प्रेमार्जितपत्रार्थं निश्चितार्थं च तस्य आगमिनष्ट नपालनं दूरदर्शित्वं सेवनं च समस्मरत् । विवाहोत्तरं प्रजासंभूतौ सहनिवासिनः पत्युरनुभूतोऽसीमितगुणगुणः कर्म तस्याः स्मृतिसरण्यां न

संस्मरेदद्य। न ह्येकदापि दर्शितस्तेन पारुष्यलेशो नोदीरितः कटुशब्द इत्यस्मार्षीत्साऽद्य। ध्याय-न्त्यास्तस्यौदार्यं, तस्य परमसौजन्यं, हृदयं तस्याः किमपि मार्दवं भेजे। विवाहोत्तरं हि नवोढा सहचरीणां तत्तज्जीवनवृत्तान्तं श्रावं श्रावं तदपेक्षयाऽत्यन्तभाग्यवत्यहमिति प्रतीता धन्य-मात्मानममंस्त सा तदानीम्। तिरोधानात्प्राक् प्रेमोत्सेकप्लाविताऽऽत्मानमहं भर्त्रेत्यप्यस्मरत्। तयाऽथ च समये तस्मिन् किमपि चिन्तासन्तानं ज्वालामुखपर्वत इव हृदये तस्य जाज्वल्यमानं तुमुलविमर्दमनवरतं विधत्ते स्मेति तयोपलक्षितमासीत्। आध्यानेन तस्य नर्तकीसंबद्धेन भवितव्यमित्यतर्कि तया तद्विरामनोचरम्। यद्येवं तर्हि कुटुम्बन्यागात्पूर्वं किमिति नाम प्रदर्शितवान् स इयन्तं प्रेमातिशयम्। किमुचितनेत्रो द्वित्रवारान् निशि शयनादुत्थाय यमलयोः पर्यङ्कं जोषमुपासरत्। निद्रास्वापकारणात्कार्यार्था मे निद्राभङ्गो मा भूदिति कतिपयसप्ताहं स प्रकोष्ठान्तरमध्यशेत। अस्वापस्य ते किं कारणमिति चिन्तापरया तयानुयुक्तः 'प्रिये! अलं चिन्तया मद्विषये। स्थलपरिवर्तनेन पुनरुल्लाघो भविष्यामीति मामाश्वासयन्सधीरमनुपः। स्वनिष्क्रमणात्पूर्वं द्वित्रमासान् यमलयोर्भोगार्थोऽकनानि भार्यायामंबराभरणानि चावर्धत्। उपालब्धामितव्ययो मया सोऽब्रवीत 'प्रिये! अलं विचिन्त्य धनव्ययम्। विरतव्यव-सायेऽपि मयि योगक्षेमसौख्याय नः पर्याप्तं द्रव्यं वर्तते'। तदेतद्वचो ध्यायन्त्यद्य 'भाव्ये तेन खलु सकर्णेनैव वचसा यत्स्वजातकर्मविषये संशयो मे न भवेदि' त्यात्मन्यकथयत्सा। पुरा पत्युर्गार्ध्यस्य चिन्तनेन प्रचण्डकोपाकुला भवति स्म सा। इदानीं ॥ तस्य परममार्दवस्मृतिरूपेण निर्झरेण किमपि परिप्लुतमभूत्तदीयहृदयं यद्वहलवत्सरेषु कष्टतुल्यं पाषाणकठोरमार्यं चासीत्। व्यचिन्तयच्च यथा—को नाम मन्दभाग्याया मे दर्शनाकाङ्क्षी स्याज्जनोऽयम्। अथ वा को जानीत यन्मया नोपस्थीयेत चेत्तर्हि पुत्रयोः पितृदायाद्ययोरपकारिणी भवेयमिति।

तदनु कश्चित्कालं परामृश्य सह सुहृदा तस्यां रात्रौ प्रस्थातुं मतिमकरोत्। पुरस्तादवलम्बमानां भित्तौ महतीं पुरातनयन्त्रघटिकां नववादनशंसिनीमवलोक्य धूमयान-स्थानकमभिगन्तुं यथाकालं सन्नद्धा भवेयमिति निश्चित्य यमलौ सपदि समाहूय भोजनं परिवेष्यतामिति परिचारिकां निर्दिष्टवती मीरा। न चिरात्क्षीरौदनापूपादिपूरितं पात्रं तत्पुरो निहितं। किंतु संक्षोभपरवशीभूता तन्नास्पृशत् सा। अथापृच्छ्य तदकल्पितप्रस्थानकुतू-हलाकुलौ यमलौ कश्मीरदेशरचितप्रावरेणावगुण्ठितस्कन्धा सा रजन्यामेकला निरगात्। कतिपयक्षणोत्तरं धूमयानस्थानकं प्रस्थास्यमानस्य भिषजो गृहं संप्राप सा।

'आगम्यतामागम्यतां तावत्। सकालमेवायाता श्रीमती। न कोऽप्यनुरायो भविता भवत्या' इति तां समाश्वास्य प्राङ्गणस्थितं शकटमरोहयत् तां वैद्यः। अथ ग्रामस्य विजनाध्वना प्रचलिते याने 'कथ्यतां कृपया कस्य संनिधिमुपेतुं प्रस्थितावावामि'-त्यनुयुक्तस्तया साग्रहं प्रत्युवाच 'मित्रं चिरपरिचितं किञ्चित्'। ततो धूमशकटे समुप-विश्य द्वित्रवारं तमेव प्रश्नमकरोत्सा। परं निवेदनलेशमात्रेणापि न सनाथीकृते तस्याः श्रोत्रे सुहृदा भद्रमुखेन।

अथ खटखटाशब्दं धूमयानं सवेगं प्रचलितम्। अतिवृष्ट्या प्लावित आसीत्क्षितितलप्रदेशोऽध्वनि। धूमयानचक्राणां कर्कशक्वणितमनवरतं शृण्वती परेद्युः को मयोपेक्ष्येत इत्येव चिन्तयन्ती प्रकोष्ठविष्टर उन्निद्रनयना स्थिता सा। निशावसानसमये तु कञ्चित्कालं निद्रिता स्वप्नेन पीडिता तु सहसा जागरिताऽभूत्। व्यभावयत्सा स्वप्ने यन्नृपः परिहितश्वेतवस्त्रः पूर्ववत्तदीयकेशकलापं करपल्लवेन परामृशन् समार्द्रं पुरस्तस्याः स्थितवानिति। परिहितवसनाविघनत्वया स कामपि लोकोत्तरप्रशान्ततां कामपि भव्यतामभजतेति कल्पयन्ती क्षणात्सा समुत्थाय वेपमानाङ्गयष्टिः प्रह्वीभूताऽऽसनपीठे निःशङ्कमवस्थिता सह पत्या निजदीर्घजीवनयात्रां ध्यायन्ती सा। 'नाहं किल तस्यापरिमितगुणानुरूपा भार्येति तेन परिहार्याऽभवमि'ति मनस्यकरोत् सा। पुनश्च विद्वेषाग्निज्वालाभिः परिदग्धहृदयाऽनिन्दत्सा स्वप्रस्थानं स्वमन्दिरात्। धूमयानाद् बहिरप्यवप्लोतुमैच्छत्सा मुदा। परं स्वपुत्रौ प्रति विधेयं चिन्तयन्ती सा विचारमिमं निरस्य कञ्चित्कालमवातिष्ठत निश्चला। प्रस्तुतं ध्यातुं प्रयतमानापि मृतवृत्तच्छायया तच्चेतः पुनरावृतमभूत्।

अथ प्रातस्तरां स्थितिं याते धूमयाने मुम्बापुरोपकण्ठस्थे माटुंगाख्ये ग्रामे विश्रान्तिसदनात् मुद्रादानीतमुपहारं भक्षयित्वा 'क्व मां नयसी'ति सोद्वेगं सकरुणं समीपमुपविष्टं गुरुमेवमपृच्छत्। 'अचिराद्भवती ज्ञास्यती'ति पूर्ववदस्फुटं स प्रत्यवादीत्। दशवादने च पांसुलाध्वना कुत्रापि सहचरद्वितीयं प्रचालितमात्मानं मीराऽपश्यत्। घटिकार्धोत्तरं च वातातरनिकराप्लुतस्य भयानकालयस्य पुरः प्राप्योपद्वारेणोद्यानं प्राविशतामुभौ। तत्र वृक्षान् जलेन निषिञ्चन्तं म्लानाकृतिं विकृताङ्गं विषण्णाननं पुरुषमेकं विच्छिन्नमानुषभावशेषमिवावलोक्य जुगुप्सिता कम्पिताङ्गयष्टिर्मीरा 'अहो भीषणत्वं स्थलस्यास्य! किमिति भवता ममानीताहमत्रे'ति निराशयोद्विग्ना सगद्गदं न्यगदत्। परं शब्दलेशोऽपि नोदीरितो मित्रेण। मध्यंशको मध्यवयस्कः पुरुषस्तौ समुपेत्य सादरमुग्रया तौ संभाष्य प्रतिदिनं दर्शनलाभादिकमिति निःश्रममुपगृह्यैकं सुहृद्द्वितीयां मीरां समनयत्। 'क्षणमात्रमप्यपि विलम्बेन निष्फलमभविष्यदागमनमत्रभवत्या' इति च संभाष्य तूष्णीभूतां कथं कथमप्यात्मानमनुगच्छन्तीमन्वपात्मीरां सदयम्। 'द्वित्रदिनान्यनवरतं भवतीमाद्यपदिश्यस्माभिरिहागन्तुं प्रार्थिता भवती'ति कुटीरस्य द्वारमुद्घाटयन् व्याहरद्भिषग्वरः। तत्र प्रविष्टमात्रा मीरा विस्फारितनयना साक्रोशं पश्चादचलत्। यतो हि प्रकोष्ठस्य मध्यभागे पृथुशय्यामनु नृपः पतितस्तस्याः विकृताकृतिरधिशयान आसीत्। क्षुद्व्याधिना निर्मांसश्मादनेन पूर्वो ध्वंसलेशोऽस्य व्यधायि। तथापि तपस्विनोऽस्य परमपीतम्लिमितेनावशिष्टमात्रेण सपदेशाम्यज्ञानात्पतिं मीरा। अथ सा धीरत्वच्युता, भीतभीता मुक्तकण्ठेन स्पर्शीभूतेव कथमप्यात्मानं नियन्तुं प्रयतमाना निपातितजानुः प्रसिद्ध्यामाने धाम्नि तदनु मृदुभाषिणामुपमानिव कर्णाभ्यां ऊर्ध्वीकृत्याश्रु नयनाभ्यां [illegible]। स तु कृपया व्यथयीत्यातुरः। मुहुर्मुहुर्नं विहृगोति परं वक्तुं मताम्। तदोच्चारणात्पूर्वमेव हि तस्य मुखात्मनो विलीनोऽभूत्। ततश्च बलक्षीणकलेवरः अन्यतामिलीहितैरेव मूर्च्छितो भवने व्यथान्नृपः। 'समागता जीवनयात्रा समाप्तेयं'ति सर्वाधिकारितमिहिनि भर्तुः पादयोर्निपत्य शोकस्मार्त तारस्वरं व्यलपन्मीरा।

कार्याधिकारी — रुग्णालयेऽस्मिंस्तन्मध्यो महानुभावः सज्जनो न कदाप्यार्तजनेषु विलोकितोऽस्माभिः । दश वर्षाणि विना भियात्र स्थितस्यास्य कदाचित्कुटुम्बस्य चिन्तयैव परमविषादोऽभूत् । तदन्तरेण सर्वदैव प्रसन्नमुखोऽयमाप्यदनवरतमुद्याने । धन्याः खलु रोगिणोऽन्ये येऽहर्निशं समासन्नव्यवसायाः पुण्यभाजस्तस्य सुधास्रवन्तीः कथाः शृण्वन्ति स्म । मधुरवाणी धन्या या सततमतिप्रसन्नस्य करुणारसनिस्यन्दिनोऽगाधगाम्भीर्यस्य सन्मुखाम्बुजस्य संपर्कमनुभवन्ती न्यवसत् । एतावान् प्रभावः करुणरसस्य तस्य ।

'धिग् धिङ्माम् । कथं पातकिन्या निन्दितो मया दुष्टव्याधिव्यथितात्मा पतिर्वरेण्यः । अहो ! कथं मे जिह्वा तमनिन्द्यं निन्दन्ती न जडीभूता । अहह ! दश वर्षाणि तस्मिन्विदेशे दोषमारोपयन्ती कथं पक्षघातग्रस्ता नाभवम् । धिग् धिङ् मे जीवनं, धिङ् मे पञ्चक्लेशरताम् । परमात्मन् दण्डार्हां मां प्रचण्डदण्डेन किं न दण्डयसि । धिङ्मामकरुणामतिनिष्ठुरामकृतज्ञाम् । अहो प्रत्यक्षीकृतभर्तृमरणया मयाद्यापि जीव्यते । स्थलं हि खलु मे हृदयं पातकिन्याः । घोरव्याधिग्रस्तेन नाथेन व्यथामात्मनो विगणय्य परमप्रेमवशादनेकैरुपायैरसमर्थं धनसंचयः कृतः येन सौख्यं सर्वथा प्राप्नुयात् कुटुम्बम् ।'

इत्यात्मानं निन्दन्ती गाढं पत्युः पादयुग्मं परिष्वज्य रुदितवत्य व्यरंसीन्मीरा । न तस्याः शोकवेगो दुर्निवारो नैकघटिकापर्यन्तमुपरामं गतः । मुहुर्मुहुरात्मानं निन्दन्तीम्, 'अविदितभूतार्थां 'किमात्मानमाक्षिपसि वृथे'ति अगदद् भिषग्गुणे । 'किमिति भवता सर्वमिदं गोपितं मम' इति सकरुणं नेत्रजलप्रक्षालितानना मीराऽपृच्छत् ।

गुणे — भगवति ! 'अप्रतिकार्यदारुणव्याधिं मे वासस्थानं चाधिकृत्य न श्लोकमात्रमपि भार्यायै निवेदनीयं यावत्स्वयमेवाहं समाह्वयामि ताम्' इति तव वल्लभेन समादिष्टेन तथेति प्रत्यश्रावि । हन्त पद्मरहस्यरक्षणं प्रियसुहृत्त्वं दुष्करं दयनीयं मेऽभूदिति भावयितुं ■ प्रभवेद्भवती खलु । पवित्रनिक्षेप इव प्रतिज्ञेयं परिपालनीयासीन्मया परमयत्नेन ।

अथापराह्णे कुङ्कुमदिग्धललाटं पुष्पमालिकाकुलं धवलाम्बरवेष्टितं प्रेतमनुपन्य स्कन्धारोपितं भिषग्गुणेप्रभृतिभिः पितृवनं नीयमानं लौकिकाचारं विगणय्य निःशब्दं विलपन्ती मीरान्वगादलक्षिता । तत्र संस्काराचारं मन्त्राग्निसंस्कृते प्रेतं यावद्दहनाय सज्जीक्रियते तावदकस्मात् मीरा शोकज्वालावलीढा चितामारुरुक्षुरुत्सुका प्रवृत्ताभूत् । महताऽऽयासेन निवारितापि दह्यमानायां चितायां क्षेप्तुमिच्छन्तीमात्मानं मुहुर्मुहुर्बलादाकृष्य सुहृन्मणिः सान्त्वगिरा समाश्वासयितुं प्रायतताम् ।

मीरा — आर्ये ! किमर्थं पापिनी मादृशी भवता यमपुरगमनान्निवार्यते दुष्टजिह्वाया मे पातकस्येदमेव प्रायश्चित्तम् ।

इति विलपन्तीं तां मित्रं सौम्यगिराभ्यधात् ।

गुणे — भगवति ! आत्महत्यया कः पुरुषार्थः साध्येत । मा स्म भूर्मन्दाऽमङ्गलचिन्तनेन । विचित्रैव घटना विधेः । अपि न जानाति भवती यत्पत्नीत्वेन चितारोहणं धर्मशास्त्रेण निषिद्धमिति अद्यतनयोर्यमलयोर्भवत्या चेष्टितेनानेनान्यायी भविष्यतोऽपि चारोऽपि न किमर्थं प्रतिरोद्धुं भवती साहसादस्मात् । सुहृन्मणिना मे कुटुम्बवत्सलेन

पुत्रकौ भवत्यै पवित्रनिक्षेप इवार्पितौ स्तः । अतस्तयोः पोषणलालनपरिपालनादिकमेव धर्मो भवत्याः। अनुतापाग्निर्भवत्याः शोकजनकः स्वाभाविक एव। असौ कालेन भगवत्कृपयोपशममेष्यत्येव ।

अथ निम्लोचति मरीचिमालिनि स्वग्रामं प्रति प्रस्थितौ। धूम्रशकटस्य प्रकोष्ठे शोकानुतापभारजडीभूता मृतप्रायेव निश्चला स्थितवती मीरा। भीषणवज्राघातनादानुकारी धूमयानचक्रनिनादोऽनवरतमाहत्य तत्कर्णकुहरौ द्विगुणीचकार तस्याः परितापम्। अतिप्रबलानुतापावसन्नानि किञ्चिदपि चलितुं नालमङ्गानि तस्याः। अनाथं मन्यमानाऽऽत्मानं दुःखेन सनाथीभूता प्रबलम्। 'अपि नाम निष्ठुरो विधिर्मरणमद्यैवोपपादयेदि' ति मुहुर्मुहुरभ्यलपत् सा। अन्तरान्तरा सुसञ्जातपरितः परिभ्रमन्ननिलोऽनुकम्पयेव क्वचिदुच्चैर्न्यश्वसीत्क्वचिद् व्यलपत्। मेघमाला किमपि घोरसमराग्रमन्वेव भयादुन्मत्तेव गगनतलस्य पारं सरभसमभ्यधावत्।

परेद्युर्योवत्पयःफेनपाण्डुरानना विशीर्णहृदयावसन्नाङ्गयष्टिर्निःशब्दं निजावासं प्रविशति मीरा सह सुहृदा यावत्कश्चित् तस्या गृहस्य पृष्ठभागाङ्गणे मयूरः खिन्नकेकारवेण सानुकम्पमिवानुशोचन्समभावयत्ताम्।



॥ श्रीगणेशाय नमः ॥

# १५. शरद्दलम्

कश्मीरेषु सुवर्णमयनगरस्य श्रीनगरस्य सम्राकन्दलाख्यसेतौ सलिमञ्जुनाम्नः कस्यचन सूचिशिल्पिनः पण्यशाला समवर्तत । पुरोभागस्तस्यालयस्य विचित्रप्रकारेणोत्कीर्णोऽम्बरचुम्बिविशालचिनारवृक्षविशेषप्रकाण्डच्छायान्धकारेऽर्धविलीनो झीलमाख्यसरितमुपरिष्टात् पर्यवैक्षत । पृष्ठभागश्च नाविकानां मलिनगृहाङ्गणावकीर्णावस्कराणां संमुखीनः स्थितः । वर्षपञ्चकात् प्राक् प्रसिद्धसलिमञ्जुसूचिशिल्पिनि दिवंगतेऽपि काष्ठमयो जीर्णापणोऽयमनाथीकृतोऽपि पूर्वकालस्मारकः सन् सर्वथा तन्नामाङ्केनैव सनाथीकृतोऽभूत् ।

अथ शरदृतौ सायमेकदा शिकाराख्यपोतविशेषः कश्मीरजवर्णाम्बरकलापभूषितस्तमापणं समासदत् । नाविकेन चावरोपिता पोतात्तस्याः कूले समवतीर्णा अर्विननामकुलोद्भवा आनाभिधा काचनामेरिकादेशीयाङ्गना ख्रैस्तधर्मप्रसारिका सोपानपङ्क्त्या समारोहदूर्ध्वभूमिम् । विपण्या बहिर्द्वारस्यान्तिकं समुपविष्टायै वनीपकायै कतिचिन्नाणकानि वितीर्य परदेशीयाऽनावृतद्वारं स्वेच्छया प्राविशदालयम् । वनीपका च दैनिकार्जितस्य गणने व्यापृता स्थितवती । दीनदीनामिमां त्रिंशद्वर्षीयामपि चिरादतिक्रान्तयौवनामिव जर्जरितकलेवरां पलितकेशकलापप्रायां विलुप्तयौवनतेजोऽक्षियुगलां वलितनेत्रापाङ्गामालोक्य कस्य हृदयं नाद्रवत् । तदीयं पाण्डुरमाननं तस्या मनोरथनैष्फल्यं प्रकटीकरोति स्म स्फुटम् । विशीर्णाम्बरप्रान्तायास्तस्या जीर्णचीवरपरिकरमध्याच्चिराद्विनष्टसौन्दर्यस्यावशिष्टचिह्नेनापि व्यक्तीभूतेन तदीया दशा द्विगुणं दयनीयतामयासीत् ।

अथ प्रविशन्तीममेरिकादेशीयामानानाम्नीं स्वर्गवासिनः सलिमञ्जोस्तनयोऽहञ्जुर्नाम गम्भीरगिरा सादरमभ्यनन्दत् । सा च प्रणम्य सूचिकर्मणि व्यापृतं युवानमभ्यधात् 'अहो नैपुण्यं शिल्पस्य भवतः ।' इत्युक्तवतीं गृहाभ्यागतां गुणगणग्राहिणीं ससंतोषं शुभासने समुपवेश्य स्वयं च भूतलं पूर्ववदध्यास्य सूचिं पुनरादधे सप्तदशवर्षीयः शिल्पी । 'अहञ्जो, क्वास्ति भवतः स्वसा' इत्यपनीतोत्तरीययाऽऽनया पृष्टो 'गृहान्तः क्वापि तया भवितव्यम् । प्रतीक्ष्यतां क्षणमात्रं यावत्तामाह्वयामी'ति प्रोच्य गेहाभ्यन्तरं च गत्वा क्षणात् त्रयोदशवर्षीयया दारिकयानुगम्यमानो मुखशालां न्यवर्तत युवा । आनामालोक्य विस्तारितकरपल्लवा वत्सा प्रधाव्य सप्रेमं पर्यष्वजत ताम् । आनापि बालाया ललाटं परिचुम्ब्याप्राक्षीद् 'वत्से ! अपि क्रियते त्वयाङ्ग्लभाषाध्ययनम्' इति । 'भगवति ! अतिदुष्करमाङ्ग्लभाषाध्ययनमेकाकिन्या न पार्यते मये'ति बालिकाभिधायाऽऽनाया नेदिष्ठ आसने सुखमुपाविशत् । 'अलं विषादेन । अहं त्वामध्यापयिष्ये स्वयमेवे'ति प्रत्यभाणीदाना दीर्घवेणीयुगलमस्यायाः परामृश्य समार्दवम् । अहञ्जुस्तावत्क्षणिकप्रदोषप्रकाशालम्बनस्यास्पष्टतया द्विगुणितयत्नेन सूचिं प्रवर्तयितुमुपाक्रमत ।

तदनु निशम्योपविष्टां बालिकां संबोध्य न्यवेदयदाना यथा । 'वत्से ! आगामिनि मासे नगरेऽस्मिन् कन्याशालां स्थापयितुमुद्यता भविष्यामीति युवां विज्ञापयितुमेव समाया-

तास्मि । बाले ! त्वमपि पाठमन्दिरमिदमायास्यसीति भृशमाशास्यते मया' । इत्यभिहिते परदेशीयया वत्सा भ्रातरि दृष्टिं निक्षिप्यादत्त्वोत्तरं च तूष्णीमस्थात् ।

'आङ्ग्लगिरमध्येतुमिच्छसि चेदवश्यमागन्तव्यं त्वये' त्याना पुनः साग्रहमवादीत् । 'पृच्छ्यतां भ्रातृदेव' इति सकातर्यमस्या कर्णेऽजपदानायाः ।

आना — न करिष्यति प्रतिबन्धं तवाग्रज इति निश्चिनोमि ।

सूचिशिल्पिना स्वकार्यव्यापृतेन निशोक्तं नाश्रावीति कृत्वा तं संबोध्य निर्बन्धपराऽऽना पुनरब्रवीत् ।

'अपि भवता पाठशालागमनं प्रतिरोत्स्यतेऽस्या दारिकायाः' ।

अह० — ( क्षणमात्रं विमृश्य ) आर्ये पाठशालागमनं न शक्यं खलु ।

आना — कुतः ।

अह० — अस्मद्रूढिव्यवहारदृष्ट्या बालिकानां पाठशालाध्ययनं निषिद्धम् ।

इति प्रतिभाष्य तरुणः सूक्ष्मसीवनं निपुणं न्यरूपयत् ।

आना — परं भवन्तः पाठशालायां प्रापिताध्ययनाः स्थ । किमिति भवदनुजाऽपि बालिकामन्दिरे नाधीयीत ।

अह० — ( गम्भीरस्वरेण ) निषिद्धमेतदस्मद्धर्मशास्त्रेण । पितृपादैरपि न क्वापि विहारायापि बहिः प्रेषितास्ति ममानुजा । अपरं च स्त्रीजातेः किं शिक्षणेन ? ।

अस्मा — भ्रातृदेव । अम्बा पितृचरणैर्बहिर्गन्तुमनुमोदितासीत् । सा लेखने पठने च पटुरासीदिति त्वयैवोक्तं त्वदन्तिकमभीक्ष्णम् ।

आना — एवं स्थिते भवत्पितृभिर्यदीदानीं धरामध्यवत्स्यत तर्हि न प्रत्यरोत्स्यत वत्सेयमध्ययनविषये ।

अह० — भगवति । निधनात्पूर्वं तातपादा अस्मा(या) न क्वापि गृहाद्बहिर्गमनमनुमोदस्वेति मामश्रावयन् ।

अस्मा — ( विस्फारितलोचना ) आः । एवम् ? ।

अह० — तदाज्ञां पालयितुमनिच्छन्ने मे निवेदिता तैः शोचनीया. कथा मृतमत्याः कस्याश्चिद्युवत्याः ।

अस्मा — ( चाटुवचसा ) केयं कथा केयम् ? कथ्यतां भ्रातृदेव तावत् ।

आनयापि कथां श्रावयितुं साग्रहमनुनीतस्तरुणः ससुखमध्याननं क्षणं च परामृश्य व्याहरत् ।

अह० — वत्से, त्वादृशा मुग्धया कथेयं श्रोतव्या न वेति न जाने । तथापि सा निदर्शनरूपेण प्रायस्त्वां प्रबोधयेत् ।

इति दीर्घं निश्वस्य व्यानुं वार्तां शिल्पी समारभत —

" शोचनीयां कथां कथयन्तः पितृपादा बाष्पपूर्णनयना मुहुर्मुहुर्विरम्य ध्यानपरास्तूष्णीं तिष्ठन्ति स्म । वनिताभ्यः स्वातन्त्र्यप्रदानमनिष्टमित्येतस्मिन् मम अध्यापनमेव कथाख्यानस्य हेतुरभूदायम्नेषाम् । "

अथाहज्जुः क्षणं विरम्य वातायने बद्धदृष्टिर्बहिरालोकयत् । क्षणेऽस्मिन् प्रदोषस्य धूसरच्छायासु घनीभूतासु प्रतिक्षणमतिशीतमरुत्ससूत्कारं प्रवेशद्वाररन्ध्रेभ्यः शीरशीरेति शब्दमकार्षीदनवरतम् । झिलमनद्याः कूलान्तवर्तिमन्दिरश्रेणिः प्रत्यासन्नतमिस्रातमसावृता तस्थौ ।

न चिरात्तुषारवृष्टिर्भवितेत्युक्त्वा कथानिवेदनमारब्ध सूचिशिल्पी——

" प्रथमसेतुवर्तिनः शिवमन्दिरस्यानतिदूरं न्यवसदेकदा सुभानाभिधः कश्चित्तत्र धनाढ्य-वणिक्कुलप्रथितप्रावीण्यः । शैशवे क्रिस्तधर्मप्रचारकैः स्थापितायामाङ्ग्लपाठशालायां सम्प्राप्ताङ्ग्लभाषाभिज्ञानो यौवने च विश्वविद्यालये संपादितोच्चशिक्षणो मुस्लिमानां पुराणलौकिकाचारक्रमं विशेषतश्च सर्वप्राचीनसुखप्रतिबन्धकं स्त्रीणां पर्दाख्यमावरण-रूढिविशेषं नितरामद्वेट् । निजनवोढार्थं स्वातन्त्र्यं प्रदातुमिच्छन् परित्यक्तप्रतिकूलवृद्ध-गुरुजनो स्वसंकल्पं विनाऽन्तरायमसाधयत्सः । अमीनाभिधा तज्जाया सौन्दर्ये जितनूरजहाना-भिधमोगलसम्राड्दयिता । "

अस्मा——( सविच्छेदम् ) अमीना ? नामैतन्मातुरावयोः किल ।

तथैवेति प्रतिपद्य अस्माया वचस्ततः पुनरुपाक्रमत निवेदयितुम् ।

"अमीनाया निखिलनगरसुन्दरीगर्वगर्वहारिणा सौन्दर्यातिशयेन सुभानः प्रमुदितान्तःकरणस्तां भृशं चकमे । सप्तदशवर्षीयेयं सुहासिनी, कान्त्या शरच्चन्द्रकलामपि न्यक्कारिणी, प्रज्ञया मोगलसम्राडौरंगजेबस्यात्मजां ज़ेबुन्निसामिवानुकुर्वती, रतिविषये निरतिः, कलाकौशलस्यादर्शः, कादम्बरीकथारसग्राहिणी, गणितशास्त्रे प्रकृत्यैव निपुणा बभूव सेति मे तातचरणाः प्रोचुः । सुभानेन स्वेनाप्यापिताङ्ग्लोर्दुभाषा प्राप्तसंस्कृतज्ञान-कोशाच्चा संपादितव्यवहारचातुर्या भर्तुर्वाणिज्यव्यवसाये बहूपयोगिनीमात्मानमकरोत्सा । श्रीनगर्यां सकलकलाकलापजन्मभूमौ निर्मितनितोपशिल्पिमण्डलस्य सुभानस्य रमण्याः परमरमणीयाननं दक्षिणगमिभ्यागन्तृजनांस्तस्यानुपमशिल्पकुतूहलिनो नितरामाकर्षत् ।"

अथाध्यापकः क्षणं विरतकथनः सूचिशिल्पमात्मीयं निपुणं निरूप्य सूचिशिल्पा-धारं पार्श्वे न्यधात् । अवसितप्रायः प्रदोष इदानीम् । समीपवर्तिनो घट्टतो नद्याः समाकर्णि सासाहिकस्नानायावगाहमानानां विलासिनीनां कलकलध्वनिः । अन्तरान्तरा नाविकनामाक्रोशसम्मिश्रः सलिलास्फालनमर्मरस्वरोऽपि श्रुतिसरण्यां न्यपतत् । तदनु सूचिशिल्पी पादौ प्रसार्य मठोपधानमेकं पृष्ठत आश्रित्य सुखं समुपविष्टः कुतूहलोत्कण्ठिता-नां स्वसारं च कथां श्रावयितुं पुनरारब्ध यथा ।

" अथ गच्छत्सु वर्षेष्वधिकाधिकप्रस्फुटितलावण्येन भार्यायाः सार्धं सुभानस्य वाणिज्यं समृद्धेः परां कोटिं प्राप । अथ तेन विन्यासप्रपञ्चनात्पीनसुन्दरेण देशान्तरं गतागतं कुर्वता सह भार्यया विहर्तुं मनागप्यवकाशो नोपालभ्यत । रमणी च तस्य सुखमेकैकाकिनी विविक्तोऽन्यादिननिर्विण्णमात्मनो विनोदयितुं कादम्बरीपठने कालमगमयत् । रात्रौ द्विम्पयोः सुखं सुप्तयोरनल्पोपधानसंकीर्णपीठिकायां शयाना क्यातनाम्नी कादम्बरी

लैलीमजनुनाम्न्यामन्यान् फारसीकथाप्रबन्धान् निष्पादितशृङ्गाररसान् वाचयन्ती चिन्तयन्ती च तद्वर्णितप्रणयलीलारोमाञ्चिताङ्गी चिरमुन्निद्रनेत्रा स्थितवत्यासीत्।

अथ सायमेकदा वसंतर्तुना विजृम्भमाणेन तरुणजनमनःसु प्रोद्दीपितरागेषु श्रीनगरोपकण्ठवर्तिक्षेत्रेषु सर्षपकुसुमैर्विद्योतमानेषु प्रफुल्लितोत्पलदलपटलविस्तारेण सार्थनामसु दलाख्यादितडागेषु जातिमल्लिकाजपादिसुमनोभिर्मण्डितेषु रम्यरम्यशालिमाराख्यादिविहारोपवनेषु कश्चिदफगानस्थानदेशीयो रूपयौवनसंपन्नः सय्यदो नाम जीलमसरित्सलिलेषु स्वदेशध्वजसनाथीकृतेन शोभनपटाच्छादितेन पोतेन विहरन्, सायंतनिकपरमरमणीयसमये समालोकि नयनजितमीनयाऽमीनया। तरुणोऽयं त्रिंशद्वर्षदेशीयो गौरवर्णः सन्नद्धगात्रः सुघटितशरीरश्चारुदर्शनः कमनीयकपोलपालिः। स्त्रैणनीतिधर्माचारं तृणमिवाकलयत् सः। सुभानशिल्पिनः पण्यशालान्तिकं पोते तस्य मन्दं मन्दं चलिते वातायनसंनिधौ कादम्बरीपठने निमग्नाऽमीनाऽपि व्यलोकयत यदृच्छया यूना। लावण्यातिशयेन तस्या आकृष्टः क्षणात्स शिल्पिनो विपणीं प्राविशत्। तक्षकस्यानुत्तमं शिल्पं सकौतुकं सोत्साहमभिनन्दते तस्मै विदेशीयाय निखिलशोभनोपकरणनिचयं दर्शयामास सुभानम् सगौरवम्। अथ नानाविधनिर्माणभङ्गीरासनपीठिकाकाण्डपट्टसवमञ्जूषादिसंभारसमूहमालोक्य कलागुणज्ञमिव नितान्तप्रमुदितमात्मानं प्रकटयतस्तस्यानवरतं लावण्यशालिन्याममीनायां दृष्टिर्न्यपतत्। द्विगुधा तयोः परस्परनेत्रसंगमोऽप्यभूत्। नृपोचितमाज्ञापत्रं नवीनोपकरणनिकरनिर्मितये तक्षकाय प्रदाय सय्यदोऽपसर्तुमनिच्छन्नपि विपण्या निरगात्। को जानीयान्नाम सय्यदः काभिर्भावनाभी रजनीमगमयदिति। परेद्यवि तु पुरान्तरं कार्यवशात् प्रतिष्ठासुः सुभानः 'सय्यदामीरेभ्यो विविधाक्षोटकाष्ठनिर्मितपरिबर्हणचयं प्रदर्श्य यथा तेष्वन्यतरत् क्रेतव्यमिति निश्चिनुयुस्ते' इति भार्यायै समादिश्य श्रीनगराश्रियंयौ तक्षकः। सायं च तस्यैव दिवसस्य शोभनश्वेतकञ्चुकः क्षौमप्रालंबरक्तोष्णीषः सुभानस्य विपणीं सय्यदः पुनः समायातवान्। अमीनया प्रदर्शितालेख्यपुस्तिकः प्रथमसंभाराज्ञामारमनो दवीकृत्य भवत्याः स्वामिनः परोक्षं समायातोऽहमिति क्षमामभ्यार्थयत विपण्या निर्गमात्पूर्वं विदेशीयः।'आगम्यतां यथेच्छम्। नित्यमेव सत्कृता भविष्यन्ति श्रीमन्तोऽत्रे'ति मृदुगिराऽमीना प्रत्यभाषत। प्रहृष्टः स्मिताननोऽपृच्छत्सय्यदः 'मयाज्ञापितोपकरणजातघटनाविधिं निरीक्षितुं ममात्रोपस्थितिर्यदि भवत्यानुमन्यते तदुपकृतो भवेयम्' इति। हन्त तया कम्पितशिरसानुमोदने प्रदत्ते तस्या दयनीयकथारम्भः समभून्किल। तथा हि। परेद्युः पुनर्विपणिं समुपस्थितः सय्यदस्तदनु च प्रतिदिनम्। सुभानस्यान्तरान्तरा गृहेऽनुपस्थित्या सय्यदामीनयोः परिचये घनीभूते न चिरान्मधुमासस्य मादकदिनेषु विहारोपवने तीव्रवृष्ट्यनन्तरं यथाशु तृणमारोहति भूतले तथा हृद्भूमौ तयोः सहसा समारोहदनुरागाङ्कुरः। सोऽयमङ्कुरः केनचिदकल्पितप्रत्यनिकरसलिलसेचनेनाप्यायमानो दृढोऽभूत्। तथा हि। एकदा कनिष्ठमपत्यममीनायाः सरित्कूल इतस्ततो धावत्स्खलदकस्माच्च सलिलेषु न्यपतत्। सुभानस्य कार्यवशाद्गृहेऽनुपस्थितौ सायंप्रवीनमममपाद्धिकिके नदीतटेऽमीनैकाकिन्यसहाया संभ्रान्ता प्रोच्चैःक्रोशितुमारेभे। तत्क्षण एव नियतेरादेशादिव धीरः सय्यदः पादचारी

सम्प्राप तत्र । स च क्षणात्तटिन्यां संप्लुत्य बालं सलीलं सलिलादुत्तोल्य संक्षुब्धाया मातुः करे प्रत्यार्पयदपाहरच्च तदीयहृदयम् । तदारभ्य तावुभौ मिथो गाढानुराग-ग्रन्थिनात्मानं निबद्धमिवापश्यताम् । सुभानश्चापरिमितकृतज्ञताभारविनतः सय्यदेनादिष्ट-सर्वोपकरणसंभारस्य मूल्यं भूरि न्यूनीकृतवान् । स विदेशीयस्तक्षकस्य गृहे कुटुम्बस्य पुरातनसुहृदिव पुरस्कृतः संभावितश्चाऽभूत् । हन्त साक्षान्मानुषरूपी भुजंगो निजगृहालये पोषितोऽभूत्तस्मनैवेति स्वप्नेऽपि नातर्कि तक्षकेणाविदग्धेन । कार्यवशान्नगरान्तरं मुहुर्मुहुर्निर्गते पत्यौ सय्यदामीने प्रदोषोत्तरं समगच्छेताम् । क्वचित्परिमहालनाम्नो निर्ध्वंसितपुरातनमन्दिरस्य विजने पृष्ठभागे मिथः संसर्गादविच्छिन्नपरमानंदं प्रापतुः । क्वचिदमेशाहीसमाख्यस्य जलाशयस्य निर्झरपूरान्तिकमुपविष्टौ शङ्करमर्मरेण सालिङ्गनमृदु-कर्णजपितानि सम्मिश्रयामासतुः । क्वचिन्मोगलसम्राट्कालीनशालिमारप्रमदवनस्य विवि-क्तकोणे चिनारवृक्षस्याधः समुपविष्टौ पयःफेनासारच्छविविडम्बिन्या विमलया ज्योत्स्नया द्विगुणीभूतप्रेमोद्रेकौ मन्दशीतसुरभिसमीरचुम्बितवदनौ निर्विकं अशङ्किस्तूल्य कतिपयहोरा अगमयताम् । कदाचिदरण्ये क्वापि द्विरेफझङ्कारमरमन्दस्वरामृतकर्णैरासेचितश्रुती पिक-सारिकादिपक्षिणां कलालापं सह निजप्रेमालापैर्मधुरमधुरैरन्वगायतामिव । अथैकदा श्रीनगराधन्यासन्ननिर्गमनमात्मनः सय्यदेन प्रेयस्यै निवेदितम् ।

' क्व यासी 'ति चिन्ताकुलाऽमीनाऽप्राक्षीत् ।

' अस्मत्सन्त्राडधिकारिभिराज्ञसेन स्वदेशं निवर्तितव्यं मयेदानीमि'ति समुन्नत-शिराः प्रत्यवादीत्सय्यदः । तरुण्याः करयुगलं निर्जीवमिवावालम्बत पार्श्वयोः । निश्चला पाण्डुरा निःशब्दा क्षणमवातिष्ठत सा । विनष्टं तद्यौवने, तदाननं पक्वीभूतं, तदीयलोचनयुग्मं देदीप्यमानचरं सम्प्रति विलुप्ततेजः समभूत् । 'मास्म गमः प्राणेश ! मास्म गम ' इति तरुणस्य बाहुं दृढं गृहीत्वान्वनयदमीना निरुद्धकण्ठी ।

सय्यदः — प्रिये ! न शक्यं किलेदृश्यां समवस्थायां निष्पमवस्थातुमावाभ्याम् ।

अमीना — कथं त्वया विना जीवितुं शक्नुयाम् ।

इत्युक्तवत्यास्तस्या नैराश्यस्वरो नितरां समतोषयत् ।

स० — नेष्यामि त्वां सह मया ।

इति तस्य वचनमाकर्ण्य रोमाञ्चिताङ्ग्यापादमस्तकं कम्पमानाङ्गयष्टिर्वेपमानेन स्वरेण ।

अमीना — बालकौ विसृज्य कथं सह त्वया गच्छेयं बत ! ।

स० — प्रेयस्यावश्यमेवानुगन्तव्यो वल्लभः ।

संत्रासाकुलहृदया विस्फारितलोचना क्षणं तूष्णीमवातिष्ठतामीना ।

स० — एतत्कथयितुमेवात्र समाहूतासीर्मया ।

अमीना — अहो ! मम बालौ ! बालौ ! बालौ ! ।

इति रुद्धबाष्पप्रवाहा हस्तपल्लवौ संपीडयन्ती सगद्गदं पुनःपुनरुदैरयद्वैरस्यादमीना ।

स० — ( अधीरतया ) यत्र सार्धं मया नो चेद् डिम्भाभ्यां सहात्रावतिष्ठस्व ।

अमीना तु निरुत्तरा स्थितवती ।

स० — अद्य रात्रौ प्रस्थास्ये । मया सहयानुमिच्छसि चेच्छादीपुरग्रामगामिमार्गस्य दक्षिणतो निवसतो वृद्धकृषीबलस्य काष्टकस्य कुटीरसमीपं मां प्रतीक्षस्वानिशीथम् । तदन्तिकमेव नदीकूलस्पृशा पोतेन बारामुल्लाख्यग्रामाय प्रस्थास्यावहे । ततो मार्तण्डोदये च श्वः पराच्छादितयानेन पिण्डीनगरं यास्यावः । कृषिकः परिचितोऽपि मे न त्वामभिजानाति । अतस्तस्यैव कुट्यां संमिलिष्यावः ।

तदाकर्ण्य मृणालपाण्डुरवदना निःशब्दा दोलायमानमनाः संत्रस्ता संभ्रान्तावनतमुखी तस्थौ सुभानस्य गेहिन्यमीना ।

अमीना — कतिपयदिनान्यनुमोदस्व मे परामर्ष्टुम् ।

इत्यनुनीतोऽपि तया शिरःकम्पेन स निराकरोदभ्यर्थनं तस्याः ।

स० — अद्य रात्रावेव गन्तव्यं मया । श्रूयते हि यत्सीमाप्रान्तवर्तिप्रदेशे जनविप्लवः समुपस्थितः ।

इत्यभिधाय स व्यरमत्सहसा सा निजत्वरितनिर्गमस्यावश्यकतामवगच्छेदिति ।

अमीना — ( बाष्पाकुललोचना कम्पमानस्वरा ) प्राणेश्वर ! यदि मां परिहास्यसि क्वचित्तदा का वा दशा मे स्यात् ।

स चोत्तरमदत्वा तां गाढमालिङ्ग्य सरभसं मुहुर्मुहुस्तदीयं ताम्बूलरागरञ्जिताधरं परिचुम्ब्य च कर्णेऽजपत् ।

स० — नित्यं त्वयि स्नेहिष्यामि । त्वमेवाजीवं मे प्रेयसी स्यास्यसि ।

अमीना — बाढम् । रात्रौ निर्दिष्टस्थाने त्वां प्रतीक्षिष्ये ।

इति निवेद्य कथाख्यानात्क्षणमहज्जुर्व्यरमत । संक्षोभकरे कलकले सरित्स्नानघट्टस्थानां विलासिनीनामिदानीं विरते प्रदोषापगमादन्धकारो न चिरात् व्यजृम्भत । संमुखीननिकेतनदीपिकानां मन्दप्रकाशाः प्रतिबिम्बिता निर्झरिण्या अम्भसि ।

अहज्जुः — "अथ रजन्यां तस्यां भाविनः शिशुविरहस्य चिन्तनेन विदीर्णहृदयाऽमीना मञ्जुलस्वरेण दोलागीतिं गायन्ती बालकौ शाययित्वा स्वकीयावश्यकवस्तूनि संचित्य भर्तारं पत्रमलिखत् । मीडाभरमन्थरा व्यज्ञापयत्सा पतिं सव्यदेन सह निजसौहार्दारम्भं, सौहार्दस्यास्य विजृम्भणं, तदनु परस्परयोर्गाढानुरागम्, पर्यन्ते 'कामपरवशीभूता सव्यदमनुगच्छन्ती क्षम्यतां यद्वाऽप्रतिर्मन्दभाग्येयं, बालकौ च मे सयत्नमभिरक्ष्येतामि' ति सानुनयं सा पतिं प्रार्थयत । समाप्ते लेखने परिधाय नीलवर्णाम्बरं, केशकलापस्य ग्रथितवेणीद्वयान्ते सुवर्णचक्राकाराभरणे निपुणं निधाय, कर्णौ रत्नखचितकुण्डलाभ्यामलङ्कृत्य, ग्रीवां च कनकचन्द्रहारेण भूषयित्वा प्रचुरकाञ्चनकङ्कणमण्डितकरपल्लवा, चंदनानुलिप्तवक्षोऽञ्जनलेखवर्धितलोचनप्रभा, मल्लिकापुष्पमालावन्धुरकन्धरा रक्तीकरणायाधरयुग्मस्य श्वासविशुद्धये चैलावदशनगजनिपत्रकपूगपुष्पकसमञ्जितां ताम्बूलवल्लीमास्वादितवती । "

'अहो ! दुरभ्यगो दुष्टाया' इत्यभ्यधादानाटोरिकादेशीया । स्तिमितघनस्तत्क्षणः क्षणमात्रं स्थितवान् । ततश्च—

अहज्जुः — " अथ यावत्सा गृहान्निरियासते तावत्सुमानो नगरान्तरान्निवर्तते । परं पत्युः अभ्यागमेनामीनायाः संकल्पस्य न कोपि प्रतिरोधोऽभूत् । विलम्ब्यमानापि सा प्रत्यैक्षत धीरं यावन्न भार्यायाः कल्पितपलायनमशङ्कमानो निद्रादेव्या गाढं गृहीतोऽभूत् । तदनु सावधानं निःशब्दं शयनादुत्थाय भर्तुरुपधानस्याधस्तात् स्वहस्तलेखं निधाय सोपममीना गृहान्निर्ययौ । तमिस्रायाम् अन्धतमसेऽप्यस्खलिता कस्यचन शाकटिकस्य वचनानुसारेण निर्दिष्टस्थलं प्रति पद्भ्यामेव प्रतस्थे । न चिरादत्र समागत्य न पोतो न वा सख्यहस्त- यालोक्यत । अनागमस्तस्याशुभशंसीति किंकर्तव्यताविपच्छिमूढा क्षणं स्तम्भितगतिरिव तिष्ठत्तामीना । तावदकस्मात्

' अमीने ! अमीने ! पतिं वार्तां च विसृज्य परपुरुषानुरागपरवशीभूय कुतोऽद्य व्यभिचारपथे पदं प्रक्षेप्तुं प्रवृत्तासि । त्वं सुमानस्याभिमानिता गेहिनी, तस्य समृद्धेर्यशसः प्रसिद्धेश्च फलं त्वया साकल्येन परिभुक्तमेव । कथं तव हृदयं न विदीर्यते सुशीलं नायमशरण्यमेकं च परित्यजन्त्याः । अवितर्कणीया भाविनी दैवघटना । निवर्तस्व गेहं निवर्तस्व शीघ्रं यावत्तव क्षेमो न निपतति पत्युः करतले ।'

" इत्यन्तःकरणेन प्रबोधितापि चिन्तावष्टम्भं परिहाय कामयोऽरुणुश्चाऽनल्पयोजनदूरं सखिभिर्निर्दिष्टं संकेतस्थानं पद्भ्यां गन्तुं कृतनिश्चयाऽविवेकान्धा स्मरातुरा धूसरच्छायया पाण्डरवृक्षविरोपपङ्क्त्या सुरक्षितोभयपार्श्वेन मार्गेणैकाकिनी प्राचलत् । क्वचित्संत्रस्ता प्रगाढनिःशब्दतया तमिस्रायाः, क्वचिद्वेपमाना सूत्कारशब्देन पाण्डरपादपप्रकम्पनसमीरस्य, स्खलत्पदा रजनीकरकरविरोचितसस्यानं विलोकयन्ती कथं कथमप्यात्मानमकर्षद् । अध्वश्रमेण निःश्वासान्ना अभिसारिकाया अस्या अनागतसर्वरोधाया रमणसंगमैष्यमाणायाः स्वदर्शनं साधयितुमुत्साहो द्विगुणीयमभूत् । क्वचित्स्रोतस्समुल्लङ्घमाना, क्वचिद्गुल्मेषु स्खलन्ती, क्वचिद्वाताहतान्यंशुकं वसनाञ्चलं मोचयन्ती, क्वचिद्वृत्तं मोचयन्ती, मन्दन्दिगन्तशीघ्रगामिनी पञ्चघटिकोत्तरं कृषीवलस्य कुटीरात्पाश्चिमं संप्राप । तावदकस्मादतिभीषणा सकडकडाशब्दं रोषाविष्टा निशाचरीव सौदामिनी गर्जन्ती समदेदीप्यत । अतिमथनकझञ्झावाते समुत्थिते पुरस्स्थूलबिन्दुभिर्वर्षितुमारब्ध भगवान् मघवा । ततश्चाकाण्डे सकडकडामहानादमेकोऽपि विशालवृक्षः सोपीतले न्यपतत् । दिष्ट्या चाभिसारिकायास्तस्याः पतत्पादपस्याधः सहसा संमर्दनेन मरणं पर्यद्रियत । परं स्वल्पच्छायया द्रुमस्य प्रतत्कोटिस्पृशमाना जडीभूता सरसप्रलवासुन्दरी सा प्राक्षिप्यत धरातले ।

" अथ श्रीनगरोपकण्ठवर्तिनि कृषिकस्य कुटीरे चिरान्मत्प्रदः प्रेयसीं प्रतीक्षमाणः स्थितवान् यावत् प्राग्दिशो धूसरवर्णाः रजतां पर्यवर्तन्त । उदक्षति मरीचिमालिनि गगनतलातारामण्डले क्रमेण मन्दीभूते निरोद्धिते च पटच्छादनापटलकटलेन निर्भरमर्मरेणेव भूतलं पर्यपूर्यत । चिरं प्रतीक्षमाणः कृषीवलस्य कुटीरे विदेशीयो भग्नाशः प्रेयस्या प्रतिज्ञाभङ्गः इत इति रोषतामभिताप्य गतः कृष्णं प्रत्यगच्छत् । न चिरादारसुन्नं सुप्त एव पोते प्रति वारामुल्लाग्रामं स्रोतःप्रतिलोमाभ्यां मन्दं मन्दमुपने शारदमीना

पतितपादपस्य वृक्षच्छायाया अधो मरणोन्मुखी स्थितास्ति। मुहुर्मुहुरात्मानमुत्थापयितुं प्रयतमानायास्तस्या असह्यवेदनाजनिताक्रोश उषःकालीनप्रशान्ततायां स्फुटमश्रावि नेदीयसि क्षेत्रे प्रयस्यमानेन सभार्येण क्षेत्रिणा। क्षणाद्दम्पती विसृज्य क्षेत्रं यतो विस्तशब्दो निस्ससार तत्रोपेत्य झटिति जर्जरितशरीरममीनायाः सायासं शाखाया अधस्ताद्विमोच्य जलबिन्दून् कतिपयांस्तस्या मूर्च्छितायाः पाण्डुरानने निषिच्य मृतप्रायां तां स्वकुटीरं प्रावेशयतामात्मध्वंसिनीमिमां वराकीम्।"

अत्र क्षणं विरते कथके 'कथं तातपादानां श्रवणपथे कथेयं निपतिते'ति दारिकयानुयुक्तोऽवशिष्टवृत्तान्तस्तेन न्यवेदि।

अहज्जुः—"कथम्? सर्वमेव सरलमभूत्। सुभानेन स्वयमेव निवेदिता कथेयं पितृपादेभ्यश्चिरादृद्धसत्येभ्यः। परं न कृषीवलो न वा तद्भार्या ययोः कुट्यामभीना समाश्रितासीत् स्वमेऽप्यतर्कयदिदं तत्रकस्य सुभानस्य गेहिनीति। चिरात्क्षोदकारुसंचयं तत्कार्यार्थमुपकल्पितवांस्तक्षकाय कृषिकोऽयम्। कतिपयदिनोत्तरं कार्यवशादभिगच्छता क्षेत्रिणा यदृच्छयाऽऽकस्मिकव्यतिकरमधिकृत्य सुभानस्य पुरः समाख्यातेऽपि क्षताङ्गया योषितया स्वभार्यया भवितव्यमिति न संशयलेशोऽपि तस्य मनसि प्राविशत्। अथ व्यतीतेषु कतिपयमासेषु पुनः श्रीनगरं प्रतियास्यते कृषीवलस्य रत्नखचितकुण्डलद्वयं विक्रयार्थं समार्पयदमीना। क्षेत्रिणः दर्शितमात्रं सुभानाय कर्णावतंसयुग्मं स्वभार्याया इति तेन झटिति प्रत्यभिज्ञाय तस्यास्तादात्म्यं वृत्तान्तश्च सर्वमवाबोधि कृषीवलतः।

असमा—अपि सुभानेन पुनः प्रवेशिता सा गृहे?

अहज्जु—कुण्डले क्रीत्वा सुभानो गेहिन्यै कामवशीभूतायै प्रथमं कुपितोऽपि दैवविकसितादकलङ्कितदेहापि क्षतदेहाऽऽरण्येति गृहं निवर्तस्वेति कृषीवलमुखात् संदेशं प्रेषितवान्। तमाकर्ण्य सा निःशब्दा स्तम्भितेव धरणीतलल्लग्नेव मूर्च्छितेव क्षणं स्थित्वा सोरस्ताडनं तारस्वरं विलपितुमारब्ध। सकरुणं सान्त्वयितुं साग्रहं भोजयितुं च तां वृथा प्रयतितेऽपि दम्पतीभ्यां मुहुर्मुहुरात्मानं निवारं निन्दन्ती रुदिताच्च सा व्यरमत्। पर्यन्ते निराहारा शोकातिशयाकुला क्षुत्पिपासावेदनाभिभूतातिश्रान्ता लोचनसलिलप्रक्षालित-कपोलाऽनुतापाग्निना दंदह्यमानाऽऽत्मानं भूतले निक्षिप्यानवरतस्रवद्बाष्पप्रवाहा निश्चला स्थितवती यावन्निशीथागमे क्षेत्रप्रयासश्रान्तौ निद्रादेव्या गृहीतौ जायापती। ततश्चासह्याधि-शारीरिकवेदनाक्रान्तापि कथं कथमपि समुत्थाय कुटीरतो निःशब्दं निरगात्। पश्चात्तापवशीभूतायाः स्वेच्छापरित्यक्तस्वजनस्य दृष्टिपथादात्मानं दूरीकर्तुमिच्छन्त्याः किं समभूदिति न कोऽप्यजानात्। बहुतिथं कालं निजशिशुप्रियचिरीर्षया तामन्वेष्टुं प्रायततरां सुभानः परं प्रयत्नेषु सर्वेषु निष्फलीभूतेषु नैराश्याद् व्यजहात्सर्वाशां पुनर्दर्शनस्य पन्थाः। प्रादुर्भावाच्च प्रतिदिनं वर्धमानानुतापाशनेरुपशमनायेव सरित्सलिलेषु तपोपष्टम्भाश्रयया भाव्य मति।

"भवतां स्यादिदानीं भवत्याः कुतः पितृपादैः प्रतिबन्धोऽकारि दारिकाया असमाया विहाराय बहिर्गमनस्येति"।

इत्यभिधाय विरतवचसि तस्मिन् गृहाभ्यागता विदेशीया निरुत्तरा तस्थौ। तत्र मन्दिराद्बहिः स्थितया वनीपकया उपर्याख्यातां कथां मूकविदीर्णहृदयेनाकर्णयन्त्या विह्वलाननस्य पाण्डुरता समवर्धततराम्। कथकस्यान्तिमपदं तीव्रव्यथितायास्तस्याः स्मृतिपटे जन्मान्तरोपात्तसंस्कारानुबन्धेनेवापरिमितशोचनीयसंस्मृतिपरम्परां व्यरचयत्। नेत्रजलमिश्रितधूलिलिप्तकपोला शीर्षोपरोधच्छिन्नप्याश्वसंयमेन निरुद्धकण्ठा मलिन-करस्कन्धान्तर्हारिद्रधूसरवर्णकेशकलापमात्मनः सरभसमनाकर्षत्। तदनु परमेश्वरस्य जन्यशो-कातिरेका सा मिलद्भन्दरुदितध्वनिर्निस्ससार तस्मात्प्रदेशात्।

'कुतः! किमेतत्! को रोदितीत्युक्त्वा बालिकाऽस्मा आत्माभिर्विदेशीयया चानुगम्यमाना प्रति वातायनमधावत्। परपागकुट्टिमपदव्यां बहिः रथ्यायां न कोऽप्यदृश्यत। नेदिष्ठ जीर्णभवनस्थितौ विमनस्केव निरानन्देवाभवत्। काश्चन पोताः कलुषजलैरिवतस्ततो विकीर्णा निश्चलास्तस्थुः। 'क्व गताऽस्मदीयपुराणमहर्षी'ति धावनदेहलीमवलम्ब-मानया वत्सपालपुत्रः 'पश्य तत्र मयाप्यसावि'ति काञ्चन छायामिवाकृतिं तुहिना-वृतायां रजन्यामनन्दं प्रचलन्तीमङ्गुल्या निर्दिशन्नदीदृशत्। त्रिभिस्तैरपसरन्त्या वनीपकाया दीनदीनाऽऽकृतिर्निपुणं निरूपिता या यया मरमरं शाश्वताऽपातं शारदलमिव भिदुर क्रमेण यावत्तिरोहिताऽभूत्।

"अहो वैलक्षण्यं प्रथमागमस्याद्य तस्या दीनायाः। तथा हि! निवृत्तानां स्वर्गगमनदिनादारभ्यैव शुनीव भिक्षमाणाऽस्योरुनयोर्बहुभीतिर्विनैकदिनस्याप्यनुपस्थितिं प्रत्यहमाप्रातरानिशं गृहाद्बहिः स्थितास्येयाऽभिरक्षितुमिवावाम्"। इत्यहञ्जुगुंडागतार्थं व्यज्ञापयत्। 'न सा केनापि संभाषते न कोऽपि वास्ति परिचितस्तस्या' इत्यसौ सदयमगदत्।

'अतिगम्भीरस्वभावया किञ्चन स्पर्शगोचरं भुवनमात्मीयमधिष्ठितं स्यादि'ति दार्शनिक इवाभिधाय दारिकया कुञ्चितरोमीयुग्मं स्नेहेन करपल्लवेन परामृश्य शीत-तीक्ष्णवातपरिहरणाय वातायनं पिहितवानहञ्जुः।

समाप्तेयं कथामुक्तावली।

# SANSKRIT WORKS

By Pandita Kshama Row

1. SATYAGRAHA GITA : Published by Maisonneuve, Paris, Price Rs. 2/8.

"Its fluent, polished Sanskrit at once rivets the interest of readers with its style and subject matter" —*The French Review.*

"Every school should have this as one of the text-books and every student study it with as much enthusiasm as he would any other great work." —*Chitramaya Jagat.*

2. UTTAR SATYAGRAHA GITA : With English Translation. Price Rs. 6/12.

"The author's mastery is truly remarkable, for the language never flags and is never flaccid" —*The Times of India.*

"This poem has all the characteristics of a great epic...." —*Bharat Jyoti.*

3. KATHAPANCHAKAM : Price Re. 1/-.

"The author's gift in the depiction of pathetic stories is remarkable." —*The Hindu, Madras.*

4. VICHITRA PARISHAD YATRA : Price 12 as.

Her personal experiences at the Trivandrum Session (1938) of the All India Oriental Conference.

5. SHANKARA-JEEVANAKHYANAM : Price Rs. 2/-.

"The style has terseness, force and precision worthy of a classical writer." —*The Hindu, Madras.*

"The description of Simla reminds one of the Sunderkanda of the Ramayana." —*Journal of the Bombay University.*

6. MIRA LAHARI : Price Rs. 1/4.

"This poem can well compare with some of the masterpieces in classical Sanskrit." —*P. E. N. Journal.*

"A source of great inspiration for the younger generation...." —*Ganganath Jha Research Institution.*

7. SRI TUKARAM CHARITRAM :

With English Translation. Price Rs. 5/- Foreign $ 2.50 or 10 sh.

"Pandita Row has done a service to literature by writing the saint's life in Sanskrit. The book which is written with great purity is worth hours of careful study...." —*Searchlight, Patna.*

"The whole work has been done in an admirable manner and the finale is excellent...." —*The Indian Express, Madras.*

"The poem possesses clarity, brevity and sweetness, the three qualities named by Sanskrit rhetoricians necessary for good poetry." —*The Evening News, Bombay.*

"The style is admirably suited to the theme." —*The Hindu, Madras.*

8. SRI RAMDAS CHARITAM: Sanskrit Text with English translation 1953. Price Rs. 5/-.

One has to read it religiously, devotionally, and imaginatively, to appreciate the scenes and incidents and the various human relations depicted—mother, son, brother, Guru, disciple, etc." —*Prerana, Bombay.*

"It speaks volumes for the great powers of the poetess that within such a short space of time she has brought out another Mahakavya in 13 cantos, following the incantation 'Shri Rama Jaya Rama Jaya Jaya Ram' first, invoked by the great sage Vishvamitra." —*Bharat Jyoti.*

9. GRAMAJYOTI: Price Re. 1/-.

'A collection of three short stories in verse depicting Gujarat villagers' self-sacrifice during the national struggle for Independence.'

10. KATHA MUKTAVALI: Price Rs. 4/8.

A collection of fifteen short stories with a foreword by Sardar K. M. Panikkar.

# N. M. TRIPATHI LTD.,

BOOKSELLERS-PUBLISHERS

PRINCESS STREET, BOMBAY - 2